# पारिभाषिकशब्दाः।

१। संख्यावाचकाः। (संस्कृते प्राकृते च)।

| | |
|---|---|
| त्रिसंख्या | शिखी। |
| चतुरसंख्या | समुद्र, वेद युग, वर्ण अब्धि। |
| पञ्चन् ,, | इन्द्रियाणि, भूतानि, शर, बाणम्, इषु, पक्षि। |
| षष् ,, | ऋतु, रस, तर्क गुणचक्रम्। |
| सप्तन् ,, | स्वरा, ऋषि वर्णा गौलाधि अश्वा, लोक। |
| अष्टन् ,, | वसु, गायत्री, नागी, फणी। |
| नवन् ,, | ग्रह, रन्ध्राणि, ख छिद्रम्। |
| दशन् ,, | दिक्, विराट् पङ्क्ति। |
| एकादशन् ,, | रुद्र, त्रिष्टुप्। |
| द्वादशन् ,, | आदित्या जगती, मास, इन। |
| चतुर्दशन् ,, | मनु, भुवनम्। |

२। मात्रावाचकाः। (प्राकृते)।

| | |
|---|---|
| मात्रा | कला। |
| गुरु | चामर, हार मणिगुण वलय कङ्कणम्। |
| लघु | शर, शर, शल्य, पत्रीं, काहल शङ्ख। |
| गुरुद्वयं | कर्ण, कुन्तीपुत्र। |
| लघुद्वय | सुप्रिय। |
| गुरुलघू | सूर्यम्। |
| लघुगुरु | नूपुर, भ्रम। |

३। गणवाचकाः। (प्राकृते)।

| | |
|---|---|
| चतुर्लघव | विप्र, द्विजवर। |
| पञ्चलघव | पापगण। |
| जगण | भूपति, पयोधर, पदातिक। |
| रगण | यौवनमध्य, मोहल, सुपक्ष। |
| भगण | चरण। |
| तगण | कामावतार। |
| सगण | हस, करतल। |
| नगण | सरगण। |

# छन्दःसारसंग्रहः ।



तुङ्गाभ्रपतिता आपो निम्नखातगता अपि ।
प्रयोजनानुसारेण ददत्यखिलमङ्गलम् ॥१॥
किमाश्चर्य्यं कदाचित्तु सुप्रतिष्ठजनस्य च ।
महोपदेशवाचोऽपि चर्य्येरन्नधमेन वा ॥२॥
इमामाशामुपाश्रित्य छन्दःसङ्कलनव्रतम् ।
चरितुं चेष्टते मूढो घोषः श्रीचन्द्रमोहनः ॥३॥
"वागर्थाविवसम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥"

सम्यगवदत् कालिदासः, 'वागर्थाविवसम्पृक्तौ पार्वतीपरमेश्वरौ' इति । यथा पार्वतीपरमेश्वरौ नित्यसहवर्त्तिनौ, तथा शब्दार्थावपि । तथापि शाक्ताः शक्तिमेवोपास्ते, शैवः शिवञ्च । एवं काव्येऽपि शब्दार्थयोर्गुण-दोषादीनां पृथक् समालोचना युज्यते ।

अनुप्रासयमकादयः शब्दालङ्कारा गद्ये पद्ये च प्रयोक्तव्याः, द्वयेऽपि तुल्यशोभाजनकत्वात् । छन्दस्तु पद्यस्य विशेषलक्षणम् । छन्दसि हि काल-परिमितान्येव वर्णानि प्रयुज्यन्ते । नैवं गद्ये ।

अर्थगुणेषु प्रसादो हि मुख्यः । यदि वाक्यार्थं पाठकाः सम्यक् नोपल-भेरन्, तदा ग्रन्थकारस्य प्रयासो व्यर्थः स्यात् । नहि तेषु पाठकानां चित्ता-कर्षणं न्यूनम् । पाठकानां चित्ताभिनिवेशं विना लेखकस्योद्देश्यं न सिध्यति । रचनाप्रभावेण यदि पाठकानां मनः समाकृष्टं स्यात्, तदैव लेखकप्रयत्नस्य मुख्योद्देश्यसाधनं भवेत् ।

सामान्यतः किमुद्दिश्य लेखकाः प्रवर्त्तन्ते ? पाठकानां चित्तविनोदनं मनःसमुन्नतिसाधनं वा तदुभयं वेति ।

मनोऽनुरञ्जन मनःसमुन्नतिसाधनादीनां निदानभूता बहवो गुणाः काव्ये स्वल्पाधिकपरिमाणा दृश्यन्ते । तेषामन्यतमोगुणः चित्रप्रकाशः । पाठकानां चित्तपटे लेखको यच्चित्रं प्रकटयति, तत् यावत्परिमितं परिस्फुटमाकर्षकञ्च भवेत्, तावन्मितमेव लिपेः स्थायि फलं निष्पद्यते । तस्मिंश्चित्रे यदि प्रकृतेः किञ्चन गूढरहस्यं निहितं स्यात्, कश्चिन्नीतिवाक्यस्य जीवन्मूर्त्तिर्वा दृश्येत, तर्हि नूनं पाठकानां चित्तोत्कर्षसाधनं सम्भाव्यते । तत्र यदा मनोहरं किञ्चन दृश्यमङ्कितं स्यात्, तदा कथं न पाठकानां चित्तविनोदनं भवेत् । चित्रकारस्तूलिकया वर्णकैश्च यथा पटं रञ्जयति, तथैव कविः कल्पनया नानाविधैः रसैश्च स्वकृतं काव्यं भूषयति । पटाङ्कितचित्रस्य चिरोज्ज्वलाय यथा तैलमिश्रितो वर्णकः प्रयुज्यते, तथैव सुललितं छन्दः काव्यस्येति शम् ।

छन्दःपरिज्ञानप्रयोजने इदं श्रुतिवचनम् ।—

'यो ह वा अविदितार्षेयच्छन्दोदैवतविनियोगेन ब्राह्मणेन मन्त्रेण याजयति, वाध्यापयति वा, स स्थाणुं वर्च्छति, गर्त्तं वा पद्यते प्र वा मीयते पापीयान् भवति, यातयामान्यस्य च्छन्दांसि भवन्त्यथ यो मन्त्रे मन्त्रे वेद सर्व्वमायुरेति श्रेयान् भवत्ययातयामान्यस्य च्छन्दांसि भवन्ति, तस्मादेतानि मन्त्रे मन्त्रे विद्यात् ।' इत्यार्षेयब्राह्मणम् । १प्र० १ ।

---

# प्रथमोऽंशः ।

## प्रथमोऽध्यायः ।

### परिभाषा ।

सर्वोक्तग्रन्थसङ्केतः ।

| | | |
|---|---|---|
| १ । | पिङ्गलच्छन्दःसूत्रम् ... ... | पि॰ इति सङ्केतः । |
| २ । | पिङ्गलस्य प्राकृतच्छन्दोग्रन्थः ... | प्रा॰ । |
| ३ । | हलायुधकृता मृतसञ्जीवन्याख्या वृत्तिः | ह॰ । |
| ४ । | कालिदासविरचितः श्रुतबोधः ... | श्रु॰ । |
| ५ । | केदारभट्टविरचितं वृत्तरत्नाकरम् ... | के॰ । |
| ६ । | नारायणभट्टकृता तट्टीका ... ... | ना॰ । |
| ७ । | वृत्तरत्नाकर-परिशिष्टम् ... ... | परि॰ । |
| ८ । | गङ्गादाससूरिविरचिता छन्दोमञ्जरी | ग॰ । |

"१ । धी श्री स्त्री म् । २ । व रा सा य् ।

३ । का गु हा र् । ४ । व सु धा स् ।

५ । सा ते क्व त् । ६ । क दा स ज् ।

७ । किं व द भ् । ८ । न ह स न् ।

९ । ग्ल् । १० । गन्ते ।

११ । भादिपरः । १२ । हे ।

१३ । लौ सः ।" इति पि॰ ।*

---

* प्रथमाष्ट-सूत्राणां व्याख्या प्रथमपृष्ठे साङ्केतिक-रेखासु संख्यानुसारेण द्रष्टव्या, अत्र हलायुध धृतैरासमाहितोद्धृता ।

"९। ग्ग्रहणं ह्रस्वैकाक्षरोपलक्षणार्थम्। तस्य लकारसंज्ञा भवति। ल शब्दस्य लघुवाचक'। तेन ह्रस्वमक्षरं लघुसंज्ञं भवतीत्यर्थः सम्पद्यते।

१०। ह्रस्वाक्षरस्य पादान्ते वर्त्तमानस्य गुरुसंज्ञातिदिश्यते ग् इति प्रथमाक्षरप्रतीकेन गुरुशब्दस्य ग्रहणम्।

११। व्यञ्जनसंयोगात् पूर्वस्य ह्रस्वस्य अनुस्वारविसर्जनीयजिह्वामूलीयोपध्मानीयेभ्यश्च गुरुसंज्ञातिदिश्यते।

१२। द्विमात्रस्य दीर्घस्य गकारसंज्ञा क्रियते।

१३। स गकारो द्विमात्रो द्वौ लघू कृत्वा गणनीयः।" इति ह०।

१४। "लः समुद्रा गणः। १५। गौ गन्तमध्यादिर्लश्च।" पि०।

"१४। चतुर्णां लकाराणां गण' इत्येषा संज्ञा विधीयते।

"१५। स हि गणः कदाचिद् गुरुद्वयेन भवति, कदाचिदन्त्येनैकेन गुरुणा, कदाचिन्मध्यमेन, कदाचिदाद्येन, कदाचिच्चतुर्भिर्लघुभि।" ह०।

२। "म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः।
समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना॥
सर्वगो मौ मुखान्तर्लौ यरावन्तगलौ सतौ।
ग्मध्याद्यौ जभौ त्रिलौ नौऽष्टौ भवन्त्यत्र गणास्त्रिकाः॥

* * * *

ज्ञेयाः सर्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः।
गणाश्चतुर्लघूपेताः पञ्चार्यादिषु संस्थिताः।
सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः।
वा पादान्ते त्वसौ गुर्व्वेयोऽन्यो मात्रिको लघुः।" के०।

३। "संयुक्ताद्यं दीर्घं सानुस्वारं विसर्गसंमिश्रम्।
विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन॥
एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनञ्चार्द्धमात्रकम्॥" श्रु०।

४। "मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्यः।
जो गुरुमध्यगतो र लमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः॥
गुरुरेको गकारस्तु लकारो लघुरेककः।
क्रमेण चैषां रेखाभिः संस्थानं दर्श्यते यथा॥" ग०।

५। अथोक्ताः संज्ञा रेखाभिर्दर्शिताः।—

ल=ह्रस्वः=ल=◡, एकमात्रक। ग्=गुरुः=लौ=—, द्विमात्रकः।

| | |
|---|---|
| १। म्=— — — | २। य्=◡ — — |
| ३। र्=— ◡ — | ४। स्=◡ ◡ — |
| ५। त्=— — ◡ | ६। ज्=◡ — ◡ |
| ७। भ्=— ◡ ◡ | ८। न्=◡ ◡ ◡ |

एतेऽष्टौ गणास्त्रिकाः।

१५। गौ=— —, गन्त=स=◡ ◡ —, रमध्य=ज=◡ — ◡,
गादि=भ=— ◡ ◡, ना=न्नौ=◡ ◡ ◡ ◡।

एते पञ्चकायतुष्कला गणाः।

यतिः=विच्छेदः=विरामः=(:)।

६। "यतिर्विच्छेदः।" पि०।

"यतिः सर्वत्र पादान्ते श्लोकार्द्धे तु विशेषतः।
समुद्रादि पदान्ते च व्यक्ताव्यक्तविभक्तिके॥
क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत्।
यदि पूर्व्वापरौ भागौ न स्यातामेकवर्णकौ॥

पूर्व्वान्तवत् स्वरः सन्धौ क्वचिदेव परादिवत् ।
द्रष्टव्यो यतिचिन्तायां यनादेशः परादिवत् ॥
नित्यं प्राक् पदसम्बन्धाश्चादयः प्राक्पदान्तवत् ।
परेण नित्यसम्बन्धाः प्रादयश्च परादिवत् ॥"

इति वृत्युपदेशोपनिषद् । वृ०

७ । छन्दोद्विविधं—वैदिकं लौकिकञ्च ।
अत्र लौकिकमेव सङ्कलितम् ।

८ । "आदौ तावद् गणच्छन्दो मात्राच्छन्दस्ततः परम् ।
तृतीयमक्षरच्छन्दः—छन्दस्त्रेधा तु लौकिकम् ॥
आर्य्याद्युद्गीतिपर्य्यन्तं गणच्छन्दः समीरितम् ।
वैतालीयादिचूलिकान्तं मात्राच्छन्दः प्रकीर्त्तितम् ॥
समान्याद्युत्कृतिं यावदक्षरच्छन्द एव च ।" छ० ।

९ । अपिच, "पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ।
वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत् ॥" ग० ।

१० । "पिङ्गलादिभिराचार्य्यैर्यदुक्तं लौकिकं द्विधा ।
मात्रावर्णविभेदेन छन्दस्तदिह कथ्यते ॥" के० ।

---

## द्वितीयोऽध्यायः ।

---

### अथार्य्याधिकारः ।

१ । "स्वरा अर्द्धञ्चार्य्यार्द्धम् । २ । अत्रायुङ् न ज् ।
३ । षष्ठोज् । ४ । न्लौ वा । ५ । न्लौ चेत् पदं द्वितीयादि ।
६ । सप्तमः प्रथमादि । ७ । अन्त्ये पञ्चमः । ८ । षष्ठश्च ल् ।"
पि० ।

"लक्ष्मैतत् सप्तगणा गोपेता भवति नेह विषमे जः ।
षष्ठोऽयं नलघू वा प्रथमेऽर्द्धे नियतमार्य्यायाः ॥

(५) षष्ठे द्वितीयलात् परके न्ले मुखलाच्च सयतिपदनियमः । (६)
(७) चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥" के० ।

५ । "तस्यैव षष्ठस्य चतुर्लघोर्गणस्य द्वितीयलघोः पूर्वं प्रथमलघून्तं सयतिपदनियमः ।

६ । "परके 'सप्तमः' । सप्तमके चतुर्लघौ सते सति, मुखलात् सप्तमस्य प्रथमलघोः पूर्वं षष्ठगणान्ते सयतिपदं नियम्यते ।

७ । "द्वितीयेऽर्द्धे पञ्चमके न्ले चतुर्लघौ तस्मान्मुखलघोः पूर्वम्, अर्थाच्चतुर्थान्ते पदं समाप्यते, इत्यनुषङ्गेण पूर्वपदाध्याहारेण योज्यम् ।" ना० ।

"यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि ।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्य्या ॥" श्रु० ।

२ । "त्रिषु गणेषु पादः पथ्यायो च ।" पि० ।

द्वादशमात्रासु यतिरिति ।

३ । "विपुलाऽन्या ।" पि० ।

विपुलास्तिस्र आद्यन्तोभयपूर्व्विकाः । यत्र प्रथमार्द्धे द्वादशमात्रासु यतिर्न भवति, अन्त्येऽर्द्धे तु भवति, सादिविपुला, विपर्य्यस्तान्त्यविपुला । उभयार्द्धयोर्द्वादशमात्रासु यत्र यतिर्न भवति सोभयविपुलेति ।

४ । "चपला द्वितीयचतुर्थौ गमध्ये जौ ।" पि० ।

"द्वितीयचतुर्थौ गणौ मध्यगुरू भवतः, प्रथमश्चान्तगुरुः ( ⏑ ⏑ — ), तृतीयो द्विगुरुः (— —), पञ्चमश्चादिगुरुः ( — ⏑ ⏑ ), शेषं यथा-प्राप्तम् । एवं गकारयोर्मध्ये द्वितीयचतुर्थौ जकारौ भवतः, सार्य्या चपला नाम ।" वृ० ।

नेयं रेखाप्रदर्शनी सूत्रसम्मता, अपरन्तु उदाहरणविरुद्धा ।*

"विपुलापूर्व्वकं महाचपलोदाहरणम् ।

१ २ज ३ ४ज ५* ६ज ७

चिवुके कपोल-देशेऽपि कूपिका दृश्यते स्मिते यस्याः ।

२ज ४ज ५* ६ ७

विपुलान्वयप्रसूतापि जायते सा महाचपला ॥" वृ० ।

अत्र प्रथमपञ्चमयोर्गणयोर्विकल्पः समीचीनो मन्यते । प्रथमस्य ( ⏑ ⏑ — ) वा (— —), पञ्चमस्य ( — ⏑ ⏑ ) वा ( — — ) चेति ।

५ । "पूर्व्वे मुखपूर्व्वा । जघनपूर्व्वेतरत्र ।
उभयोर्महाचपला ।" पि० ।

यस्याः प्रथमार्द्धे एव चपलालक्षणं भवति नान्त्ये, सा मुखचपला, विपर्य्यस्ता जघनचपला । यस्या उभयोरर्द्धयोश्चपलालक्षणं भवति, सा आर्य्या महाचपला नाम ।

६ । "एवमेव भवति पथ्या विपुलास्तिस्रस्ततश्चतस्रस्ताः ।
चपलाभेदैस्त्रिभिरपि भिन्ना, इति षोड़शार्य्याः स्युः ॥
गीतिचतुष्टयमित्थं प्रत्येकं षोड़शप्रकारं स्यात् ।
प्राकर्ण्यमार्य्याणामशीतिरेव भेदाः स्युः ॥" वृ० ।

## गीतिः ।

"आद्यार्द्धसमा गीतिः ।" पि० ।

"एतदुक्तं भवति द्वितीयेऽप्यर्द्धे षष्ठो गणो जकारो न्लौ वा कर्त्तव्यः ।" ह० ।

"आर्य्या-पूर्वार्द्धसमं द्वितीयमपि भवति यत्र हंसगते ।
छन्दोविदस्तदानीं गीतिं तामस्मृतवाणि भाषन्ते ॥" श्रु० ।

यदुक्तमार्य्या प्रकरणे तत् सर्वमत्रापि वक्तव्यम् । तेन हि गीतेरपि षोडश भेदा स्युः ।

## उपगीतिः ।

"अन्त्येनोपगीतिः ।" पि० ।

"अन्त्येनार्द्धेन सममाद्यमर्द्धं यस्याः, सा आर्य्या उपगीतिर्नाम ।" ह० ।

"आर्य्योत्तरार्द्ध-तुल्यं प्रथमार्द्धमपि प्रयुक्तं चेत् ।
कामिनि तामुपगीतिं प्रतिभाषन्ते महाकवयः ॥" श्रु० ।

पूर्वदर्शित न्यायेन एतस्या अपि षोडश भेदा विस्पष्टा ।

## उद्गीतिः ।

"उत्क्रमेणोद्गीतिः ।" पि० ।

"आद्यमन्त्यं भवत्यर्द्धमन्त्यमादौ, सा उद्गीतिर्नामार्य्या ।" ह० ।

अस्या षोडश भेदा पूर्ववत्तोका ।

## आर्य्यागीतिः ।

"अर्द्धे वसुगण आर्य्यागीतिः ।" पि० ।

"अष्टमोऽपि गणश्चतुर्मात्रको भवतीत्यर्थः । विशेषाभावाद्द्वितीयमप्यर्द्धं तादृगमेव । अत्रापि षष्ठो गणो द्विविकल्प एव न्लकारः । अर्द्ध-

इति वर्त्तमाने पुनरर्द्धग्रहणाद् गणग्रहणाच्च इयमपि पथ्यादि-लक्षण-पूर्विका आर्य्यागीतिः ।" छ० ।

तस्मादेव षोडश भेदा निर्दिष्टाः ।

मात्र चतुष्कल गणाः ।

| | | गु′ १ | २ | गु′ ३ | ४ | गु′ ५ | ६ | गु′ ७ | [illegible] | मात्रासंख्या । |
|---|---|---|---|---|---|---|---|---|---|---|
| १ । | आर्य्यार्द्ध | | | () | | | ज्, न्लौ वा | | | ३० |
| | अन्यार्द्ध | | | () | | | ज्, न्लौ वा | | | ३० |
| २ । | आ० | | | () | | | ल् | | | २७ |
| | आ० | | | () | | | ल् | | | २७ |
| ३ । | आ० | | | () | | | ल् | | | २७ |
| | आ० | | | () | | | ज्, न्लौ वा | | | ३० |

अष्ट-चतुष्कल-गणाः ।

| | | गु′ १ | २ | गु′ ३ | ४ | गु′ ५ | ६ | गु′ ७ | ८ | मा० सं० । |
|---|---|---|---|---|---|---|---|---|---|---|
| ४ । | आ० | | | () | | | ज्, न्लौ वा | | | ३२ |
| | आ० | | | () | | | ज्, न्लौ वा | | | ३२ |

१ । पथ्यागीतिः ।  २ । पथ्योपगीतिः ।

३ । पथ्योद्गीतिः ।  ४ । पथ्यार्य्यागीतिः ।

अत्र गीति-चतुष्टयानां सर्वेषां पथ्यारूप आकृतिक विशेष दर्शितम्। आर्यायाः पथ्यारूपं ये परिवर्तने षोडश भिदं प्रदर्शितं, ते परिवर्तनैरेव गीति चतुष्टयानां सर्वेषाम् षोडश भिदं बोद्धव्यम् ।

## आर्य्याभेदानामुदाहरणानि ।

### १ । पथ्यायाः ।

(क) अत्र चतुर्थेषु पञ्चमगणस्य प्रथमलघुना यतिः ।

"मणिबन्धनतो गलितं (:) संक्रान्तोशीर(:)परिमलं तस्याः ।
हृदयस्य निगड़मिव मे (:) मृणाल-वलयं स्थितं पुरतः ॥

सुभग-सलिलावगाहाः (:) पाटल-संसर्ग(:)सुरभिवनवाताः ।
प्रच्छाय-सुलभ-निद्रा (:) दिवसाः परिणाम-रमणीयाः ॥" शकु० ।

"स्तन-युगमश्रु-स्नातं (:) समीपतरवर्त्ति(:)हृदय-शोकाग्नेः ।
चरति विमुक्ताहारं (:) व्रतमिव भवतो रिपुस्त्रीणाम् ॥" कादम्बरी ।

"मृग-मीन-सज्जनानां (:) तृण-जल-सन्तोष(:)विहित-वृत्तीनाम् ।
लुब्धक-धीवर-पिशुना (:) निष्कारण-वैरिणो जगति ॥

यदचेतनोऽपि पादैः (:) स्पृष्टः प्रज्वलति(:)सवितुरतिकान्तः ।
तत्तेजस्वी पुरुषः (:) परकृत-निकृतिं कथं सहते ॥" भर्तृहरिः ।

"परिणत-कठोर-पुष्कर(:)गर्भच्छदपीन(:)मसृण-सुकुमारः ।
नन्दयति चन्द्र-चन्दन (:) निस्यन्दजड़स्तव स्पर्शः ॥" भवभूतिः ।

(ख) षष्ठो गणो मध्यगुरुः ।

"रम्यास्तपोधनानां(:)प्रतिहत-विघ्नाः क्रियाः समवलोक्य ।
ज्ञास्यति कियद् भुजो मे (:) रक्षति मौर्वीकिणाङ्क इति ॥

आपरितोषाद्विदुषां (:) न साधु मन्ये प्रयोग-विज्ञानम् ।
बलवदपि शिक्षितानाम्(:)आत्मन्यप्रत्ययं चेतः ॥

कः पौरवे वसुमतीं (:) शासति शासितरि दुर्विनीतानाम् ।
अयमाचरत्यविनयं (:) मुग्धासु तपस्विकन्यासु ॥" शकु० ।

"छिन्नापि रोहति तरुः (:) क्षीणोऽप्युपचीयते पुनश्चन्द्रः ।
इति विमृशन्तः सन्तः (:) सन्तप्यन्ते न ते विपदा ॥

"अप्रिय-वचन-दरिद्रैः (:) प्रिय-वचनाढ्यैः स्वदार-परितुष्टैः।
पर-परिवाद-निवृत्तैः(:)क्वचित् क्वचिन्मण्डिता वसुधा॥" भर्त्तृहरिः।

"भ्रमरति गगवर-विम्बे (:) विहित-विलम्बे च माधवे विधुरा।
विरचित विविध-विलापं (:) सा परितापं चकारोच्चैः॥" गी० गो०।

२। आदिविपुलायाः।

"स्निग्ध-च्छाया-लावण्य-लेपिनी किञ्चिदवनत-प्राप्रा।
सुख-विपुला सौभाग्यं (:) लभते स्त्रीत्याह माण्डव्यः॥" वृ०।

३। अन्तविपुलायाः।

"चित्तं हरन्ति हरिणी-दीर्घ-दृशः कामिनां कलालापैः।
नीवी-विमोचन-व्याज-कथित-जघना जघनविपुला॥" वृ०।

४। उभयविपुलायाः।

"या स्त्री कुचकलस-नितम्बमण्डले जायते महाविपुला।
गम्भीर-नाभिरतिदीर्घ-लोचना भवति सा सुभगा॥" वृ०।

५। पथ्यापूर्वं मुखचपलायाः।

"अतिदारुणा द्विजिह्वा परस्य मर्मानुसारिणी कुटिला।
दूरात् परिहरणीया नारी नागीव मुखचपला॥" वृ०।

६। आदिविपुलापूर्व्वकं मुखचपलायाः।

"यस्याश्च लोचने पिङ्गले भ्रुवौ महती मुखं दीर्घम्।
विपुलोन्नताश्च दन्ताः कान्ताऽसौ भवति मुखचपला॥" वृ०।

७। उभयविपुलापूर्व्वं मुखचपलायाः।

"विपुलाभिजात-वंशोद्भवापि रूपातिरेक-रम्यापि।
निःसार्य्यते गृहाद्गृहमपि यदि भवति मुखचपला॥" वृ०।

८। पथ्यापूर्वं जघनचपलायाः।

"यत् पादस्य कनिष्ठा (:) न स्पृशति महीमनामिका वापि।
का सर्व्व-धूर्त्त-भोग्या (:) भवेदवश्यं जघनचपला॥" वृ०।

९ । अन्तविपुलापूर्व्वक जघनचपलाया ।

'यस्याः पादाङ्गुष्ठं व्यतीत्य याति प्रदेशिनी दीर्घा ।
विपुले कुले प्रसूतापि सा भुव जघनचपला स्यात् ॥" छ० ।

१० । महाविपुलापूर्व्वक जघनचपलाया ।

'मकरध्वज सद्मनि दृश्यते स्फुट तिलकं लाञ्छनं यस्याः ।
विपुलान्वयाभिजातापि जायते जघनचपलासौ ॥' छ० ।

११ । पथ्यापूर्व्वक महाचपलाया ।

"हृदयं हरन्ति नार्य्यो मुनेरपि भ्रू कटाक्ष विक्षिपैः ।
दोर्मूलं नाभिदेशं निदर्शयन्त्यो महाचपला ॥' छ० ।

१२ । विपुलापूर्व्वक महाचपला, दश पृष्ठे उदाहृता ।

१३ । गीतेः । (क) पथ्या,

"मधुर वीणा रणित पञ्चम सुभगय कोकिलालाप ।
गीति पौरवधूनामधुना कुसुमायुध प्रबोधयति ॥" छ० ।
अपिच,
"तुज्झ ण आणे हिअअं मह उण कामो दिवा वि रत्तिं वि ।
णिग्घिण तवेइ बलिअं तुइ वुत्त मणोरहाइ अङ्गाइं ॥' शकु० ।

(ख) आदिविपुला,

"इयमपरा विपुला गीतिरुच्यते सर्व्व लोक हित हेतो ।
यदनिष्टमात्मनस्तत्परेषु भवतापि मा क्वचित् कारि ॥" छ० ।

(ग) पथ्या महाचपला,

"कामसुकान्ति गीतिर्मृगीदृशां सीधुपान चपलानाम् ।
सुरतेषु मुक्तलज्जं निरर्गलालाप मणितं रमणीयम् ॥" छ० ।

(घ) महाचपला महाविपुला ।

"पञ्चेषु वल्लभ. पञ्चम ध्वनिस्तत्र भवति यदि विपुल: ।
चपलं करोति कामाकुलं मन: कामिनाममी गीति ॥" छ० ।

१४ । उपगीतिः । (क) पथ्या,

"गान्धर्वं मकरध्वज देवस्यास्त जगद्विजयि ।
इति समवेक्ष्य मुमुक्षुभिरुपगीतिस्त्यज्यते देश: ॥" छ० ।

(ख) महाविपुला,

"विपुलोपगीति झङ्कार-सुखरिते भ्रमरमालानाम् ।
रैवा तपोवने वस्तुतोऽस्तु सततं मम प्रीति. ॥" छ० ।

तथाच, गीतगोविन्दे । सप्तमो गणो ज् इत्येव प्रभेद: ।

"रमयति सुदृश कामपि सुभृशं, खल हलधर सोदरे ।
किमफलमवसं चिरमिह विरसं, वद सखि विटपोदरे ॥
इह-रस भणने कृत हरि गुणने, मधु रिपु पद-सेवके ।
कलि युग चरितं न वसतु दुरितं, कवि नृप जयदेवके ॥"

(ग) पथ्या महाचपला,

"विषयामिषाभिलाषं करोति चित्तं सदा चपलम् ।
वैराग्य भावनानां तथोपगीत्या भवेत् स्वस्थम् ॥" छ० ।

(घ) महाचपला महाविपुला,

"विपुलोपगीति सन्त्यज्यतामिदं स्वकचकं भिचो ।
विषयाभिलाष-दोषेण बाध्यते चञ्चलं चित्तम् ॥" छ० ।

१५ । उद्गीति. । (क) पथ्या,

"व्याध इवोद्गीतिरवै: प्रथमं तावन्मनो हरसि ।
दुर्नयकर विश्राम्यसि पश्चात् प्राणेषु विप्रियै: शस्त्रैः ॥" छ० ।

(ख) महाविपुला,

"एषा तवापरोद्गीतिरत्र विपुला परिभ्रमति ।
त्वद्गमपि यत्कीर्त्तिरखिलदिक्‌पाल-पार्श्वमुपयाति ॥" छ० ।

(ग) पथ्या महाचपला,

"उद्गीतिरत्र नित्यं प्रवर्त्तते काम-चपलानाम् ।
तस्मात् मुने विमुच्य प्रदेशमेत समेतमेताभिः ॥" छ० ।

(घ महाविपुला महाचपला,

"विपुला पयोधर-श्रोणि मण्डले चक्षुषोश्चपला ।
उद्गीति-शालिनी कामिनी च सा बाल्गिनी मनो हरति ॥" छ० ।

१६ । आर्य्यागीतिः । (क) पथ्या,

"हृदय सदा यादवतः पापाटव्या दुरासदायादवतः ।
अरिसमुदायादवतस्त्रिजगन्मार्गाः स्मरेण दायादवतः॥" नलोदयः ।
"अजमजरममरमेकं प्रत्यक् चैतन्यमीश्वरं ब्रह्मपरम् ।
आत्मानं भावयतो भवमुक्तिः स्यादितीयमार्य्यागीतिः ॥" छ० ।

(ख) महाविपुला,

"विषयाभिलाष-मृगतृष्णिका ध्रुवं हरति हरिणमिव हतहृदयम् ।
विपुलात्म मोक्ष-सुख-काङ्क्षिभिस्ततस्त्यज्यते विषय रस सङ्गः ॥" छ० ।

(ख) पथ्या-जघनचपला,

"वाताहतोर्म्मिमाला चपलं समीक्ष्य विषयसुखमल्पतरम् ।
मुक्त्वा समस्तसङ्गं तपोवनान्याश्रयन्ति तेनात्मविदः ॥" छ० ।

(घ) महाविपुला-महाचपला,

"चपलानि चक्षुरादीनि चित्तहारी च हन्त हत-विषयगणः ।
एकान्तशीलिनां योगिनामतो भवति परम सुख-सम्प्राप्तिः ॥" छ०।

---

## तृतीयोऽध्यायः ।

अथो वैतालीयाधिकारः ।

१ । "वैतालीयं द्विस्वरा अयुक्पादे, युग्वसवोऽन्ते ल्गौ: ।" पि० ।

"यत्र प्रथमे पादे तृतीये च चतुर्दश लकारा भवन्ति, द्वितीये चतुर्थे च षोड़श लकाराः, तद्वैतालीयं नाम छन्दः। उभयोरपि पादयोरन्ते रेफ-लकार-गकाराः कर्त्तव्याः । तत्रोदाहरणम् ।

शव-शोणित-पङ्कराञ्जितं, पुरुषान्त्र ग्रथितोर्द्ध मूर्द्धजम् ।
वपुरन्तर-वह्नि-दीपितं, वैतालीयमिदं विलोक्यताम् ॥" इ० ।

२ । "गौपच्छन्दसकम् ।" पि० ।

"अस्मिन् वैतालीये छन्दस्यन्ते गकारश्चेदधिको भवति, तदौपच्छन्दसकं नाम छन्दः । तत्रोदाहरणम् ।

परमर्म-निरीक्षणानुरक्तं, स्वयमत्यन्तनिगूढ़ चित्त हत्तिम् ।
अनवस्थितमर्थलुब्धमारादौपच्छन्दसकं जहीहि मित्रम् ॥" इ० ।

"औपच्छन्दसिकम्" इति के० ।

३ । "आपातलिका भ्गौग् ।" पि० ।

"रेफ लकार गकाराणामपवादो भकारो गकारद्वयञ्च । 'द्विस्वरा अयुक्-पादे, युग्वसवोऽन्ते' इत्यनुवर्त्तते । तत्रोदाहरणम् ।

पिङ्गलकेशी कपिलाक्षी, वाचाटा विकटोन्नत दन्ती ।
आपातलिका पुनरेषा, नृपति कुलेऽपि न भाग्यमुपैति ॥" इ० ।

४ । "शेषे परेण युङ् न साकम् ।" पि० ।

"अत्र येषां नियम उक्तस्तद्व्यतिरिक्तो यो लकारवर्गः सः शेषः । युक् परेण न मिश्रीकार्यः, द्वितीयस्तृतीयेन, चतुर्थः पञ्चमेन, युक्पादे षष्ठश्च सप्तमेन । एवं वदता शेषाणां मिश्रीभावोऽप्यनुज्ञातः ।" ह० ।

५ । "षट् चामिश्रा युजि ।" पि० ।

"अत्र द्वितीय-चतुर्थयोः पादयोः षड् लकारा अमिश्रा न कर्त्तव्याः, पृथक् पृथक् न प्रयोक्तव्या इत्यर्थः । प्रथम-तृतीययोश्च पादयोः स्वरुचि ।" ह० ।

६ । "पञ्चमेन पूर्वः साकं प्राच्यवृत्तिः ।" पि० ।

"युजीत्यनुवर्त्तते । यदा युक्पादे पञ्चमेन लकारेण पूर्वः सङ्गच्छते, तदा प्राच्यवृत्तिर्नाम वैतालीयं भवति । शेषं यथाप्राप्तम् ।" ह० ।

७ । "अयुक् तृतीयेनोदीच्यवृत्तिः ।" पि० ।

"अयुक्-पादे तृतीयेन लकारेण यदि पूर्वः सङ्गच्छते, तदा उदीच्यवृत्तिर्नाम वैतालीयम् । शेषं यथाप्राप्तमेव ।" ह० ।

८ । "आभ्यां युगपत् प्रवृत्तकम् ।" पि० ।

"युक् पादे पञ्चमेन चतुर्थोऽयुक् पादे तृतीयेन द्वितीयः सङ्गच्छते, इत्यर्थः ।" ह० ।

९ । "अयुक् चारुहासिनी ।" पि० ।

"यस्य सर्वे पादा अयुग्लक्षणयुक्ताः, तद्वैतालीयं चारुहासिनी नाम । किंलक्षणं, चतुर्दशमात्रत्वं, तृतीयेन पूर्वस्य योगः ।" ह० ।

१० । "युगपरान्तिका ।" पि० ।

"युग्लक्षण युग्मैश्चतुर्भिः पादैः अपरान्तिका नाम वैतालीयम् । किं लक्षणं, षोडश मात्रत्वं पञ्चमेन पूर्वस्य योगः षण्णां मिश्राणां प्रयोगश्च ।" ह० ।

११ । वैतालीयान्तर्गते छन्दी—सुन्दर्यपरवक्त्रे । औपच्छन्दसिकान्तर्गता मालभारिणी पुष्पिताग्रा-भद्रविराज । आपातलिकान्तर्गता वेगवतीति ।

## १३ । उदाहरणानि ।

१ । (क) शुद्धवैतालीये,

"समर-शिरसि सह्यते द्विषां, नव निशितायुधदृष्टिरग्रतः ।
कुवलय दल दीर्घ चक्षुषां, प्रमदानां न कटाक्ष-वीक्षितम् ॥" इ० ।

(ख) प्राच्यवृत्त्याम्,

"विपुलार्थ-सुवाचकाक्षराः, कस्य नाम न हरन्ति मानसम् ।
रस-भाव-विशेष-पेशलाः, प्राच्यवृत्ति-कवि काव्य-सम्पदः ॥" इ० ।

(ग) उदीच्यवृत्त्याम्,

"अवाचकमनूर्जिताक्षरं, श्रुतिदुष्टं श्रुतिकष्टमक्रमम् ।
प्रसाद रहितञ्च नेष्यते, कविभिः काव्यमुदीच्यवृत्तिभिः ॥" इ० ।

(घ) प्रवृत्तके,

"इदं भरत-वंश भूभृतां, श्रूयतां श्रुति मनो-रसायनम् ।
पवित्रमधिकं शुभोदयं, व्यास वक्त्र कथितं प्रवृत्तकम् ॥" इ० ।

(ङ) चारुहासिन्याम्,

"मनाक्-प्रहृत-दन्त दीधितिः, स्फुरोल्लसित गण्डमण्डला ।
कटाक्ष-ललिता तु कामिनी, मनो हरति चारुहासिनी ॥" इ० ।

(च) अपरान्तिकायाम् ।

"स्थिर-विलास-नत-मौक्तिकावली, कमल कोमलाङ्गी मृगेक्षणा ।
हरति कस्य हृदयं न कामिनः, सुरत केलि कुशलापरान्तिका ॥" इ० ।

शुद्ध-वैतालीयस्य युक्-पाद-लक्षणयुतैश्चतुर्भिः पादैरपरान्तिकोदाहरण-मपि दृश्यते, यथा भागवते ४।७।२८।

"इदमप्यच्युत विश्वभावनं, वपुरानन्दकरं मनोदृशाम् ।
सुरविद्विट्क्षपणैरुदायुधैर्भुजदण्डैरुपपन्नमष्टभिः ॥"

२ । औपच्छन्दसके ।

"परयुवतिषु पुत्रभावमादौ, कृत्वा प्रार्थयते पुनः प्रतिलम् ।
इदमपरमिहोच्यते विशेषादौपच्छन्दसकं खलस्य वृत्तम् ॥" इ० ।

शेषपञ्चदशकस्य युक्पाद-ल्लघुयुक्तैश्चतुर्भिः पादैश्छन्दोऽपि दृश्यते, यथा भट्टिकाव्ये, २२।२३।

"काव्यमिदं विहितमया वलभ्यां, श्रीधर सूनु नरेन्द्र-पालितायाम्।
कीर्त्तिरतो भवतां नृपस्य तस्य, क्षेमकरः क्षितिपो यतः प्रजानाम्॥"

३। आपातलिकायाम्।

"अभिरमयति किन्नरकण्ठी, हंसगतिः श्यामायतनेत्रा।
विमद कमल-कोमल गात्री, युवतिरियं हृदयं तरुणानाम्॥" इ०।

---

## चतुर्थोऽध्यायः।

---

अथ मात्रासमकाधिकारः।

१। "गन्ता द्विर्वसवो मात्रासमकं नवमः।" पि०।

"यत्र पादे गन्ता सन्तः षोडश लकारा भवन्ति, तन्मात्रासमकं नाम छन्दः। अन्ते द्वाभ्यामेको गुरुः कर्त्तव्यः। नवमश्च लकार एव। शेषे परेण युङ् न साकमित्यनुवर्त्तनीयम्।" ह०।

२। "द्वादशश्च वानवासिका।" पि०।

"यस्य मात्रासमकस्य पादे द्वादशो लकारः स्वरूपेणावतिष्ठते, नवमश्च, तन्मात्रासमकं वानवासिका नाम।" ह०।

३। विश्लोकः पञ्चमाष्टमौ।" पि०।

"यत्र चतुष्पादेषु पञ्चमाष्टमौ लकारौ तिष्ठतः, शेषं यथाप्राप्तं, तन्मात्रासमकं विश्लोको नाम।" ह०।

४ । "चित्रा नवमश्च ।" पि० ।

"यस्य नवमः लकार एवावतिष्ठते, चकारात् पञ्चमाष्टमौ च, तन्मात्रासमकं चित्रा नाम ।" ह० ।

५ । "परयुक्तेनोपचित्रा ।" पि० ।

"दशमेन सहैकीभूतेन नवमेन उपचित्रा नाम भवति ।" ह० ।

६ । "एभिः पादाकुलकम् ।" पि० ।

"एषां पञ्चानां मध्ये यैः कैश्चिदपि चतुर्भिः पादैः पादाकुलकं नाम ।" ह० ।

७ । "प्रतिपद यमकित षोड़शमात्रा, नवम गुरुत्व विभूषित गात्रा ।
पज्झटिका पुनरत्र विवेकः, क्वापि न मध्यगुरुर्गण एकः ॥" ग० ।

उपचित्रा सदृशी एषा, यमकेनैव विशेषिता । चर्मे विरति जगण नोक्तमप्युक्तमिव गाकर मीश्रुकर प्रयोगविधि । द्वौ पदेषु गुरु न लाकमिति सामान्य वचनेन हि मध्यगुरुर्गणो बाध्यते ।
पज्झटिका पुनरष्टभिः नवधा जाता, यथा— वैताल प्राकृत गाथा मध्य गुरु

"प्रतिपादं चत्वारः चतुष्कला गणास्तत्रान्तिमो जगण एव, एवं चतुर्भिः पादैश्चतुःषष्टिमात्रं पज्झटिकाच्छन्दः ।" मा० ।

८ । "नवम गुरुत्वं व्यभिचरति च । स्याधरणी जितरजनिविहारीति ।"
ग० ।

९ । षड्मात्रासमकान्तर्गतछन्दांसि—पङ्क्तौ पणवत्रिष्टुभी मौक्तिकदाम जगत्यां तोटकञ्च ।

१० । वानवासिकान्तर्गतछन्दांसि—पङ्क्तौ मत्ता त्रिष्टुभि भ्रमरविलसिता कुड्मलदन्ती च, जगत्यां कुसुमविचित्रा ललना (पि०) च, शक्वर्यां सुपवित्र प्रहरणकलिता चक्रपदञ्च, अतिशक्वर्यां चन्द्रावर्ता माला मणिगुणनिकरश्च ।

११ । विश्लोकान्तर्गतछन्दांसि—अतिजगत्यां श्येनी, शक्वर्यां सुपवित्र चक्रपदञ्च, अतिशक्वर्यां चन्द्रावर्ता माला मणिगुणनिकरश्च ।

१२ । चित्रान्तर्गतछन्दांसि—शक्वर्यां सुपवित्र चक्रपदञ्च, अतिशक्वर्यां चन्द्रावर्ता माला मणिगुणनिकरश्च ।

१३ । उपचित्रान्तर्गतछन्दांसि—अर्द्धसमवृत्तस्य द्रुतमध्या, अनुष्टुभि विद्युन्माला, पङ्क्तौ रुक्मवती सुषमा च, त्रिष्टुभि दोधकोऽनवसिता च, जगत्यां धामरसम्, अतिजगत्यामण्डी चेति ।

१४। अथ मात्रासमक भेदा रेखाभिर्दर्श्यन्ते।

| छन्दः-नामानि | पादचतुष्टयानां प्रत्येकं षोडशमात्रिकं | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ |
| मात्रासमकं (क) | \| | ·\| | \| | ·\| | \| | ·\| | \| | \| | ⌣ | ·\| | \| | ·\| | \| | \| | — | |
| वानवासिका (ख) | \| | ·\| | \| | ·\| | \| | ·\| | \| | \| | ⌣ | ·\| | \| | ⌣ | \| | \| | — | |
| विश्लोकः (ग) | \| | ·\| | \| | \| | ⌣ | ·\| | \| | ⌣ | \| | ·\| | \| | ·\| | \| | \| | — | |
| चित्रा (घ) | \| | ·\| | \| | \| | ⌣ | ·\| | \| | ⌣ | ⌣ | ·\| | \| | ·\| | \| | \| | — | |
| उपचित्रा (ङ) | \| | ·\| | \| | ·\| | \| | ·\| | \| | \| | — | \| | \| | ·\| | \| | \| | — | |
| पादाकुलकं (च) | \| | ·\| | \| | ·\| | \| | ·\| | \| | ·\| | \| | ·\| | \| | ·\| | \| | \| | — | |
| पज्झटिका (छ) | \| | ·\| | \| | ·\| | \| | ·\| | \| | \| | — | \| | \| | ·\| | \| | \| | — | |
| रथवरथी | \| | ·\| | \| | ·\| | \| | ·\| | \| | \| | ⌣ | ·\| | \| | ·\| | \| | ·\| | \| | \| |

१५। मात्रासमक-भेदानामुदाहरणानि-चोद्धृतानि।

(क) शुद्ध-मात्रासमकं,

“पञ्चस्तुमुखो विरलैर्दन्तैर्गम्भीरारावो मित-मासादः।
निर्घोष-वपुः स्फुटितैः केशैर्मात्रासमकं लभते दुःखम्।” ३०।

(ख) वानवासिकायाम्,

"मन्मथ चाप-ध्वनि रमणीयः, सुरत-महोत्सव पटह-निनादः ।
वनवास-स्त्री स्तनित विशेषः, कस्य न चित्तं रमयति पुंसः ॥" छ० ।

(ग) विश्लोके,

"भ्रातर्गुणरहितं विश्लोकं, दुर्नय कारण कदर्थित लोकम् ।
जातं महति कुलेऽप्यविनीतं, मित्र परिहर साधु विगीतम् ॥" छ० ।

(घ) चित्रायाम्,

"यदि वाञ्छसि परपदमारोढुं, मैत्रीं परिहर सह वनिताभिः ।
मुह्यति मुनिरपि विषयासङ्गाच्चित्रा भवति हि मनसो वृत्तिः ॥" छ० ।

तथा च गीतगोविन्दे,

"श्वसित पवनमनुपम परिणाहम्, मदन-दहनमिव वहति सदाहम् ।
दिशि दिशि किरति सजल-कण-जालम्, नयन नलिनमिव विगलित-नालम् ॥"

(ङ) उपचित्रायाम्,

"यच्चित्तं गुरु मन्त्रमुदारं, विद्याभ्यास-महाव्यसनञ्च ।
धन्यो तस्य गुणैरुपचित्रा, चन्द्र मरीचि निभैर्भवतीयम् ॥" छ० ।

(च) पादाकुलके, क ग ख-ङ इत्येव क्रमैः पादैः,

"अलि मालाञ्चित विकसित चूते, काले मदन समागम दूते ।
त्यक्त्वा कान्तां परिहृत मार्गः, पादाकुलकं धावति पान्थः ॥" छ० ।

अपि च, ग ड-क ड इत्येव क्रमैः पादैः,

'पुंस्कोकिल-कल शोभन गीते, दक्षिण पवन प्रेरित शीते ।
मधु समयेऽस्मिन् कान्त वियोगः, पादाकुलकं नृत्यति लोकः ॥" छ० ।

तथा क ड ड ग इत्येव क्रमैः पादैः,

'चित्तं भ्राम्यत्यनवद्याङ्गं, पादाकुलक चौक समागम् ।
कान्त. कार्यति मायति शक्तिमदपि न मम परमोऽहं भक्तिः ॥" छ० ।

ऽ ॥ ऽ ऽ इत्येव क्रमैः पादैः,

"परिहर मर्त्त्य परिग्रह लोकः, प्रतिदिन वर्द्धित-गुरुतर-शोकः ।
दुःख-विवर्द्धित-लोचन-वारिः, पाटाकुलक याति तवारिः ॥" ६० ।

तथा च गीतगोविन्दे,

(घ) "नयन विषयमपि किसलय-तल्पम्,
(ङ) गणयति विहित-हुताश-विकल्पम् ।
त्यजति न पाणि तलेन कपोलम्,
बाल-शशिनमिव सायमलोलम् ॥
(घ) हरिरिति हरिरिति जपति सकामम्,
(ङ) विरह-विहित-मरणेव निकामम् ।
(ञ) श्रीजयदेव-भणितमिति गीतम्,
सुखयतु केशव-पदमुपनीतम् ॥
(ङ) सजल नलिनदल-शीतल शयने,
(ञ) हरिमवलोकय सफलय नयने ।
(घ) जनयसि मनसि किमिति गुरु खेदम्,
(ङ) शृणु मम वचनमनीहित भेदम् ॥
(ञ) हरिरुपयातु वदतु बहु मधुरम्,
किमिति करोषि हृदयमतिविधुरम् ।
श्रीजयदेव भणितमतिललितम्,
(ग) सुखयतु रसिकजनं हरिचरितम् ॥"

(छ) पज्झटिकायाम्,

"मा कुरु धन जन यौवन-गर्व्वम्, हरति निमेषात्कालः सर्व्वम् ।
मायामयमिदमखिलं हित्वा, ब्रह्मपदं प्रविशाशु विदित्वा ॥
नलिनी दल गत जलमतितरलम्, तद्वज्जीवनमतिशय चपलम् ।
विद्धि व्याधि व्याल ग्रस्तम्, लोकं शोक हतञ्च समस्तम् ॥"

इति शङ्कराचार्यकृते मोहमुद्गरे ।

नारायणभट्टस्य च,

"जे जे गज्जिअ गउड़ वइ राउ, उद्दण्ड-ऊडज सभअ पराउ ।
उरु-विक्कम-विक्कम-जणिअ-जूरु, ताकण परक्कम कोइ ण बुज्झु ॥"

see errata XX I

---

## अथो पञ्चमोऽध्यायः ।

---

१ । "गीत्यार्य्या लः ।" पि० ।

"यत्र पादे द्विर्मवः षोड़श-लकारा भवन्ति, सा गीत्यार्य्या नाम जातिः । ल इत्यनुवर्त्तमाने पुनर्लग्रहणं द्विमात्रिकनिवृत्त्यर्थम् ।" * छ० ।

२ । "शिखा विपर्य्यस्तार्द्धा ।" पि० ।

"यत्रार्द्धं सर्व्वलघु भवति, अर्द्धञ्च सर्व्व-गुर्व्विति । एवं तस्या एव विन्यास-भेदेन संग्राहयमाह ।" छ० ।

३ । "लः पूर्व्वश्चेज्ज्योतिः ।" पि० ।

"पूर्व्वश्चेदर्द्धभागः सर्व्वलघुर्द्वात्रिंशल्लकारो भवति, उत्तरश्च सर्व्वगुरुः षोड़श-गकारः, तदा ज्योतिर्नाम शिखा भवति ।" छ० ।

४ । "गश्चेत् सौम्या ।" पि० ।

"तस्या एव शिखायाः पूर्व्वार्द्धभागः सर्व्वगुरुः षोड़श-गकारश्चेद्भवति, उत्तरश्च द्वात्रिंशल्लकार एव, तदा सौम्या नाम शिखा भवति ।" छ० ।

---

* यस्याम् चतुष्षष्टिमात्रा समस्तं गीत्यार्य्या कथितम् ।

५। "अष्टावर्द्धे गा द्वाभ्यस्ता यस्याः मानङ्गक्रीडोक्ता।*
*दलमपरमपि वसुगुणित सलिलनिधि लघु कविरचित पदविततिर्भवति॥"*

कै॰।

६। "चूलिकैकोनत्रिंशदेकत्रिंशदन्ते ग्।" पि॰।

"यत्र प्रथमेऽर्द्धे एकोनत्रिंशल्लकारा भवन्ति, द्वितीये चार्द्धे एकत्रिंशत्, तयोश्च अन्ते द्वौ लकारावुन्मूल्य प्रत्येकमेको गुरु' क्रियते, तच्चूलिका नाम छन्दः। अन्ते गिति विशेषोपादान सामर्थ्यादन्येषां लघुत्वमुक्तं भवति। *तेनाद्ये सप्तविंशतिर्लघवोऽन्ते गुरुरेको भवति। द्वितीयेऽप्येकोनत्रिंश* लघवोऽन्ते गुरुश्चैकः।

अन्ये: पुनरन्यथैवेदं सूत्रमधीयते, 'चूलिकार्द्धेमेकोनत्रिंशदन्ते गिति।' तेषामुभयोरप्यर्द्धयोरेकोनत्रिंशन्मात्रा गुर्वन्ता भवन्ति। अर्द्धग्रहणादत्र पादव्यवस्था नास्ति।" हृ॰।

७। "त्रिगुण नव लघुरवसिति गुरुरिति दलयुग(ल)कृत तनुरतिरुचिरा।"

कै॰।

तारानाथतर्कवाचस्पति प्रकाशिते पुस्तके नारायणभट्टकृत टीकायामयं पाठो दृश्यते। किन्त्वधिकाक्षर दोष परिहारार्थं लिख्येकाक्षरीन्यूनं कर्त्तव्यमित्युपपन्नतम्।

वृत्तरत्नाकरटीकोक्त लक्षण 'चूलिकार्द्धमेकोनत्रिंशदन्ते ग' इत्येव पैङ्गलसूत्र पाठ समञ्जसम्।

८। "मात्रात्रयोदशकं यदि, पूर्वं लघुकपरिविरामि।
पठ पुनरेकादशं दोहडिका द्विगुणेन॥ प्राकृतभाषायां प्रचारः।" ग॰।

तारानाथधृत पाठोऽयं मात्राधिक्यदोषान् परिहार्य्यः, परन्तु रामतारणशिरोमणिधृत पाठ समीचीनो मन्यते, तद्यथा—

"मात्रात्रयोदशकं यदि, पूर्वं लघुक-विरामि।
पश्चादेकादशकन्तु, दोहडिका द्विगुणेन॥ अपभ्रंशभाषायां प्रचारः।" ग॰।

लघुक विरामि अन्त्यवर्णो लघुरिति, पूर्वं प्रथमपादे, पश्चाद्द्वितीयपादे चेत्यर्थः।

---

* सौम्यात् अनङ्गक्रीड़ा नाम्नीका।

९। एतदध्यायोक्तजातयो रेखाभिर्दर्श्यन्ते। यथा—

| छन्दोनामानि। | | अर्द्धे | वर्णसंख्या | | अर्द्धयो मात्रासंख्या |
|---|---|---|---|---|---|
| | | | लघु | गुरु | |
| गीत्यार्या | | प्रत्येक | ३२ | ० | ६४ |
| मिश्रा विभागभेदेन | ज्योति | आद्ये | ३२ | ० | ६४ |
| | | अन्त्ये | ० | १६ | |
| | सौम्या | आद्ये | ० | १६ | ६४ |
| | | अन्त्ये | ३२ | ० | |
| चूलिका | | आद्ये | २७ | १* | ६० |
| | | अन्त्ये | २९ | १* | |
| अन्या चूलिका | | प्रत्येक | २७ | १* | ५८ |

*अन्ते।

## १०। उदाहरणानि।

### १। गीत्यार्यायाम्।

"मदकल-खगकुल-कलरव-सुखरिणि, विकसित-सरसिज-परिमल सुरभिणि।
गिरिवर-परिसर-सरसि सङ्गति खलु, रतिरतिशयमिह मम हृदि विलसति॥"
छ०।

### २। ज्योतिषि।

"यदि सुखमनुपममपरमभिलषसि, परिहर युवतिषु रतिमतिशयमिह।
आत्मज्योतिर्योगाभ्यासाद्दृष्ट्वा दुःखच्छेदं कुर्याः॥" छ०।

### ३। सौम्यायाम्।

"सौम्यां दृष्टिं देहि स्नेहाद्देह्यस्माकं मानं मुञ्च।
शशधरमुखि सुखमुपनय मम हृदि, मनसिज-रुजमपहर लघुतरमिह॥"
छ०।

४ । चूलिकायाम् ।

"रतिकर-मलयजकलित शुभगन्धमभिहत-हिममहसि मधुसमये ।
प्रवससि पथिक विरहित कथमिह तु परिहृत युवतिरतिचपलतया ॥
घनपरिमल मिलदलिकुल-मुखरित निखिल-कमल-मलयपवने ।
जनयति मनसि शशिमुखि मुदमतिशयमिह मम मधुरयमधुना ॥" छ० ।

---

## अथ षष्ठोऽध्यायः ।

१ । कतिचिन्मात्राच्छन्दांसि छन्दोग्रन्थेषु नोक्तानि, पुनस्तानि काव्ये दृश्यन्ते । अतस्तेषां सोदाहरणं लक्षणानि यथामति प्रदर्श्यन्ते ।

एतानि मन्दप्रचाराणि च यानि पिङ्गलाचार्येण नामनिर्देशं कृत्वा नोक्तानि, तानि सर्वाण्येव गाथा शब्देन कथ्यन्ते, यथा—

"अत्रानुक्तं गाथा ।" पि० ।

"अत्र शास्त्रे नामोद्देशेन यन्नोक्तं छन्दःप्रयोगे च दृश्यते तद्गाथेति मन्तव्यम् ।" ह० ।

२ । आद्यार्द्धे विंशतिर्मात्राः, दशमेऽन्ते च यतिः । अन्त्यार्द्धे षोड़श-मात्राश्च ।

यथा, "प्रलय-पयोधि-जले धृतवानसि वेदम् ।
विहित वहित्र-चरित्रमखेदम् ॥
क्षितिरतिविपुलतरे तव तिष्ठति पृष्ठे ।
धरणिधरणकिण-चक्र-गरिष्ठे ॥" गी० गो० १स० ।

३। आद्यार्द्धे विंशतिर्मात्रा एकादशेऽन्ते च यतिः। अन्यार्द्धे एकविंशतिर्मात्रा दशमेऽन्ते च यतिः। तत्रोदाहरणम्,

"वहति मलयसमीरे मदनमुपनिधाय।
स्फुटति कुसुमनिकरे विरहि हृदय-दलनाय॥
दहति शिशिर-मयूखे मरणमनुकरोति।
पतति मदन विशिखे विलपति विकलतरोऽति॥" गी० गो० ५स०।

वक्ष्यमाणेषु भिन्नैव यतिः—

"अमल-कमलदललोचन भवमोचन ए।
त्रिभुवन-भवन-निधान जय जय देव हरे॥" गी० गो० १स० ३, ५।

४। उभयार्द्धयोः पञ्चदश मात्रा अन्ते च यतिः। तत्रोदाहरणम्,
"अनिल-तरल-कुवलयनयनेन, तपति न सा किशलयशयनेन।
सखि या रमिता वनमालिना॥ ध्रु।
"विकसित-सरसिज ललितमुखेन। स्फुटति न सा मनसिज विशिखेन॥
अमृतमधुर-मृदुतर वचनेन। ज्वलति न सा मलयज-पवनेन॥
स्थलजलरुह-रुचिकर-चरणेन। लुठति न सा हिमकर-किरणेन॥
* * * * *
श्रीजयदेव भणित-वचनेन। प्रविशतु हरिरपि हृदयमनेन॥"
गी० गो० ७स०।

५। उभयार्द्धयोः सप्तदश मात्रा अन्ते च यतिः। तत्रोदाहरणम्,
"प्रविश राधे माधव-समीपमिह। मञ्जुतर-कुञ्जतल-केलिसदने॥ ध्रु।
नवभवदशोकदल-शयनसारे। कुसुमचयरचित-शुचि वासगेहे॥
चल-मलय-वन-पवन-सुरभि-शीते। वितत-बहुवल्लि-नवपल्लव-घने॥
विहित-पद्मावती-सुख-समाजे। भणति जयदेव-कविराजराजे॥"
गी० गो० ११स०।

६। उभयार्द्धयोर्विंशतिर्मात्रा अन्ते च यतिः। तत्रोदाहरणम्,

"कथित समयेऽपि हरिरहह न ययौ वनम् ।
मम विफलमिदममलरूपमपि यौवनम् ॥
यदनुगमनाय निशि गहनमपि शीलितम् ।
तेन मम हृदयमिदमसम शर-कीलितम् ॥
* * * *
अहमिह निवसामि नगणितवनवेतसा ।
स्मरति मधुसूदनो मामपि न चेतसा ॥
हरिचरणशरण-जयदेव कविभारती ।
वसतु हृदि युवतिरिव कोमल कलावती ॥" गी० गो० ७स० ।

७। उभयार्द्धयोश्चतुर्विंशतिर्मात्रा अन्ते च यतिः । तत्रोदाहरणम्,
"हरि हरि हरि हतादरतया गता सा कुपितेव । ध्रु ।
मामियं चलिता विलोक्य वृतं वधूनिचयेन ।
सापराधतया मयापि न वारितातिभयेन ॥
किं करिष्यति किं वदिष्यति सा चिरं विरहेण ।
किं धनेन जनेन किं मम जीवितेन गृहेण ॥
* * * *
क्षम्यतामपरं कदापि तवेदृशं न करोमि ।
देहि सुन्दरि दर्शनं मम मन्मथेन दुनोमि ॥
वर्णितं जयदेवकेन हरेरिदं प्रवणेन ।
किन्दुबिल्व समुद्रसम्भव-रोहिणीरमणेन ॥" गी० गो० ३स० ।

अर्द्धचेदेकपादं गणयेत्ततः सप्तदशाक्षरसमवृत्तं स्यात्, तल्लक्षणं—
रैफतः सगणश्च जौ भगणास्तदाऽमृतवारि इति ।

८। उभयार्द्धयोः सप्तविंशतिर्मात्रा अष्टमे षोड़शे अन्ते च यतिः ।
तत्रोदाहरणम्,
"समुदित-मदने, रमणीवदने, चुम्बन-वलिताधरे ।
मृगमदतिलकं, लिखति सपुलकं, मृगमिव रजनीकरे ॥" गी० गो० ७स० ।

९। उभयार्द्धयोरष्टाविंशतिर्मात्रा अष्टमे षोड़शे अन्ते च यतिः। तत्रोदाहरणम्,

"धीरसमीरे, यमुनातीरे, वसति वने वनमाली । ध्रु ।
नामसमेतं, कृतसङ्केतं, वादयते मृदुवेणुम् ।
बहु मनुते ननु, ते तनुसङ्गत पवन चलितमपि रेणुम् ॥
पतति पतत्रे, विचलति पत्रे, शङ्कित भवदुपयानम् ।
रचयति शयनं, सचकित नयनं, पश्यति तव पन्थानम् ॥
मुखरमधीरं, त्यज मञ्जीरं, रिपुमिव केलिसुलोलम् ।
चल सखि कुञ्जं, सतिमिरपुञ्जं, शीलय नीलनिचोलम् ॥
* * * *
श्रीजयदेवे, कृतहरिसेवे, भणति परमरमणीयम् ।
प्रमुदित-हृदयं, हरिमतिसदयं, नमत सुकृत-कमनीयम् ॥"
गी॰ गी॰ ५स॰ ।

यतिर्विभिन्ना यथा—

"ललितलवङ्गलता परिशीलन-कोमल-मलय समीरे ।
मधुकर-निकर-करम्बित कोकिल कूजित-कुञ्जकुटीरे ॥
हरिरिह सरस वसन्ते, विहरति हरिरिह सरसवसन्ते ।
नृत्यति युवतिजनेन समं सखि विरहिजनस्य दुरन्ते ॥ ध्रु॰ ।
उन्मद-मदन मनोरथ पथिकवधूजन-जनित-विलापे ।
अलिकुल सङ्कुल कुसुमसमूह निराकुल वकुलकलापे ॥
* * * *
श्रीजयदेव भणितमिदमद्भुत केशव केलिरहस्यम् ।
वृन्दावन विपिने ललितं वितनोतु शुभानि यशस्यम् ॥"गी॰गी॰ १स॰ ।

१०। उभयार्द्धयोरूनत्रिंशन्मात्राः । तत्रोदाहरणम्,

"कुरु यदुनन्दन चन्दनशिशिरतरेण करेण पयोधरे ।
मृगमदपत्रकमत्र मनोभव मङ्गल कलश सहोदरे ॥

अलिकुलगञ्जनमञ्जनकं रतिनायक-शायक-मोचने ।
त्वदधर-चुम्बन-लम्बित-कज्जलमुज्ज्वलय प्रिय लोचने ॥
नयन-कुरङ्ग-तरङ्ग-विकाश-निरासकरे श्रुतिमण्डले ।
मनसिज-पाश विलासधरे शुभवेश निवेशय कुण्डले ॥

* * * *

श्रीजयदेव वचसि जयदे हृदयं सदयं कुरु मण्डने ।
हरिचरण-स्मरणामृत-कृत-कलिकलुष-ज्वरखण्डने ॥" गी० गी० १२स० ।

११ । उभयार्द्धयोश्चतुस्त्रिंशन्मात्रा दशमे विंशे अन्ते च यतिः । तत्रोदाहरणं गीतगोविन्दे १०म-सर्गे ।*

"प्रिये चारुशीले, प्रिये चारुशीले, मुञ्च मयि मानमनिदानम् ।
सपदि मदनानलो, दहति मम मानसं, देहि मुखकमल मधुपानम् ॥ ध्रु ।
वदसि यदि किञ्चिदपि, दन्तरुचिकौमुदी, हरति दर-तिमिरमतिघोरम् ।
स्फुरदधर-सीधवे, तव वदनचन्द्रमा, रोचयति लोचन-चकोरम् ॥

* * * * *

स्मर-गरल-खण्डनं, मम शिरसि मण्डनं, देहि पदपल्लवमुदारम् ।
ज्वलति मयि दारुणो, मदन-कदनानलो, हरतु तदुपाहितविकारम् ॥
इति चटुल चाटुपटु-चारु मुरवैरिणो, राधिकामधि वचनजातम् ।
जयति पद्मावतीरमण कविभारती, जयदेव-भणितमतिशातम् ॥"

१२ । उभयार्द्धयोः षट्त्रिंशन्मात्राः । तत्रोदाहरणम्, भागवते,

"पादैर्न्यूनं शोचसि मैकपादमुतात्मानं वृषलैर्भोक्ष्यमाणम् ।
आहो सुरादीन् हृतयज्ञभागान्, प्रजा उतस्विन्मघवत्यवर्षति ॥ १।१६।२१।
यस्मिन् हरिर्भगवानिज्यमान, इज्यात्ममूर्त्तिर्यजतां शं तनोति ।
कामानमोघान् स्थिरजङ्गमानामन्तर्बहिर्वायुरिवैष आत्मा ॥" १।१७।३४।

१३ । उभयार्द्धयोरष्टात्रिंशन्मात्राः । तत्रोदाहरणम्, महाभारते,

* जयदेवस्य सर्व्वाण्येव गीतानि मुक्तलित यमकच्छन्दसा रचितानि ।

"यदाश्रौषं मागधानां वरिष्ठं, जरासन्धं क्षत्रमध्ये ज्वलन्तम्।
दोर्भ्यां हतं भीमसेनेन गत्वा, तदा नाशंसे विजयाय सञ्जय॥
यदाश्रौषमर्जुनं देवदेवं, किरातरूपं त्र्यम्बकं तोष्य युद्धे।
अवाप्तवन्तं पाशुपतं महास्त्रं, तदा नाशंसे विजयाय सञ्जय॥"

---

## अथ सप्तमोऽध्यायः।

---

१। अत्र गणनामात्रच्छन्दसां गुरुलघुसंख्यानिरूपणं क्रियते।

२। "सा ग्येम न समा लां ग्ल इति।" पि०।

"'ग्ल' इत्यक्षराण्यभिधीयन्ते, तेषां गुरुलघुरूपत्वात्। अयमभिप्रायः, आर्य्यादिषु शास्त्रे यावत्यो मात्रा उपदिष्टास्तावन्त्यक्षराणि यथासंख्यं न पूर्य्यन्ते, सा तत्र गुरुसंख्या वेदितव्या, अवशिष्टा लघुसंख्या।" ह०।

३। साङ्केतिकव्याख्यया एवं बोद्धव्यम्।

अक्षराणि=ग्लः=ग्+ल्। मात्रासंख्या=२ग+ल=मा। इत्थं, मा—ग्लः=ग, अपि च ग्लः—ग=ल।

४। तस्योदाहरणं गीतगोविन्दे ७म सर्गे,

"प्रसरति शशधरबिम्बे विहितविलम्बे च माधवे विधुरा।
विरचितविविधविलापं सा परितापं चकारोच्चैः॥" २।

अत्र द्विचत्वारिंशदक्षराणि वर्त्तन्ते। आर्य्यालक्षणेन तेषां सप्तपञ्चाशत् सङ्ख्यका मात्रा भवितव्या। तेन हि मा=५७, ग्ल=४२। अतः ग=५७—४२=१५, गुरुसंख्या। अपि च, ल=४२—१५=२७, लघुसंख्या। तथा च,

"अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात्।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा॥"

अत्र सप्तत्रिंशदक्षराणि वर्त्तन्ते। तेन ग्ल=३७। अतः ग=५७—३७=२०, गुरुसंख्या। अपि च ३७—२०=१७, लघुसंख्येति।

इति घोषकृते छन्दःसारसंग्रहे जातिभेदो नाम सप्तमोऽध्यायः।

---

# द्वितीयोऽंशः ।

## प्रथमोऽध्यायः ।

### अथ वृत्तम् ।

१ । "वृत्तम् ।" पि० ।

"तथा चोक्तम् 'पद्यं चतुष्पदं तच्च वृत्तं जातिरिति द्विधा ।' गायत्र्यादौ छन्दसि वर्त्तते इति 'वृत्तम्' । तच्च स्थिरगुरुलघुस्वर-विन्यासमिष्यते । पादेन संयोगात् पद्यम् । यथा आर्य्यादिच्छन्दःस्वपि पादव्यवस्था नास्तीति पादौ संयुक्तौ, वृत्ते पुनः पृथग्भवत इत्यर्थः । संयोगाभावात् । तथा चोक्तम्, 'एकदेशस्थिता जातिर्वृत्तं गुरु लघु स्थितम्' इति ।" ह० ।

२ । "सममर्द्धसमं विषमञ्च ।" पि० ।

"समसर्व्वावयवत्वात् 'समम्' । यस्य चत्वारः पादा एकलक्षणयुक्तास्तत् 'समं वृत्तम्' । शेषञ्च संज्ञानुरूपमेव । तत्रार्द्धे समे यस्य तत् 'अर्द्धसमम्' । सर्व्वावयवेभ्योऽर्द्धाभ्याञ्च विगतं समं यस्य तत् 'विषमम्' । एवं त्रिप्रकारमपि वृत्तजातमुक्तम् ।" ह० ।

३ । "युक् समं विषमञ्चायुक् स्थानं सद्भिर्निगद्यते ।
सममर्द्धसमं वृत्तं विषमञ्च तथापरम् ॥
अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः ।
तच्छन्दःशास्त्रतत्त्वज्ञाः समवृत्तं प्रचक्षते ॥
प्रथमाङ्घ्रि-समो यस्य तृतीयश्चरणो भवेत् ।
द्वितीयस्तुर्य्यवद्वृत्तं तदर्द्धसममुच्यते ॥

"अरच्यमाणां स्त्रिय उर्व्वि वालान्, शोचस्यथो पुरुषादैरिवार्त्तान् ।
वाचं देवीं ब्रह्मकुले कुकर्म्मण्यब्रह्मण्ये राजकुले कुलाग्रयान् ॥" १।१६।२२।
"महत् सेवां द्वारमाहुर्विमुक्तेस्तमो द्वारं योषितां सङ्गिसङ्गम् ।
महान्तस्ते समचित्ताः प्रशान्ता, विमन्यवः सुहृदः साधवो ये ॥" ५।५।२।

---

## तृतीयोऽध्यायः ।

अथानुष्टुभ्भेदाः ।

१ । "पादस्यानुष्टुब्वक्त्रम् । न प्रथमात् स्नौ । द्वितीय-चतुर्थयो रश्च । वान्यत् । य चतुर्थात् ।" पि० ।

"अत्र वक्त्रजातौ पादस्य 'प्रथमात्' वर्णादूर्द्धं सगणनगणौ न कार्य्यौ । द्वितीयचतुर्थयोश्च पादयोः प्रथमादूर्द्धं रैफोऽपि न कर्त्तव्य इत्युपदेशः । सगणनगणाभ्यामन्यत् मगणादि-त्रिकषट्क-मध्ये यत्किञ्चित् त्रिकान्तरं 'वा' कर्त्तव्यम् । पादस्य चतुर्थादक्षरादूर्द्धं यकारः प्रयोक्तव्यः ।" ह० ।

२ । "पथ्या युजो ज् । विपरीतैकीयम् ।" पि० ।

"अत्र वक्त्रे युजः पादस्य चतुर्थादक्षरादूर्द्धं जकारः प्रयुज्यते, तद्वक्त्रं पथ्या नाम । उक्तलक्षणाद्विपरीतलक्षणा एकीयमते पथ्या भवति ।" ह० ।

३ । "चपलाऽयुजो न् ।" पि० ।

"अयुक्पादस्य यदा चतुर्थादूर्द्धं नकारो भवति, युक्पादे य एवावतिष्ठते, तदा चपला नाम सानुष्टुब्वक्त्रम् । ह० ।

४ । "विपुला युग्लः सप्तमः । सर्व्वतः सैतवस्य । भ्नौ न्तौ च ।" पि० ।

> "विपुला युग्लः सप्तमः सर्व तत् सैतवस्य च ।,
> भ्नौ न्तौ वा विपुलानेका वक्त्र-जातिः समीरिता ।" इत्यग्नि पु० ।

"य चतुर्थादित्यनेन सर्व्वत्र यकारे प्राप्ते, यदा युक्पादे सप्तमो वर्णो लघुर्भवति, तदा विपुला नाम । ननु पथ्यालक्षणान्तर्भूतत्वात् पुनरुक्तमेतत् । नैवं विपुलावर्गस्येदानीमारभ्यमाणत्वात्, तद्विनानुपपत्तेः । युक्पादे सप्तमेन लघुनावश्यमेव भवितव्यम् । प्रथम तृतीययोर्येतावता यकारस्यापवादः । तथा च वक्ष्यति 'सर्व्वतः' इत्यादि । 'सैतवस्य' आचार्य्यस्य मतेन युक्पादे-ऽयुक्पादे च सप्तमो लकार एव कार्त्तव्यः ।

अयुक्पादे यदा चतुर्थादक्षरात्परतो यकारं बाधित्वा भकार-रेफ-नकार-तकारा विकल्पेन भवन्ति, तदासौ विपुला नाम । चकारात् मकार सकाराभ्यामपि विपुलोपदिष्टा ।

इत्यादयो विपुलाविकल्पाः सङ्कीर्णाद्यनुकोटिशः काव्येषु दृश्यन्ते । सर्व्वासां विपुलानां चतुर्थो वर्णः प्रायेण गुरुर्भवतीत्याम्नायः ।" ह० ।

५ । "वक्त्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् ।
युजोर्जेन सरिद्भर्त्तुः पथ्यावक्त्रं प्रकीर्त्तितम् ॥" के० ।

केदारभट्टकृते वक्त्रलक्षणे 'द्वितीयचतुर्थयोः पादयोः प्रथमादूर्द्ध्वं रेफोऽपि न कर्त्तव्य' इति पिङ्गल हलायुधीयटीकायां दृश्यते ।

६ । "श्लोके षष्ठं गुरु ज्ञेयं सर्व्वत्र लघु पञ्चमम् ।
द्विचतुःपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥" श्रु० ।

पादानां प्रथमाक्षरात्परतः 'सनभनगणौ न कार्यौ, द्वितीयचतुर्थयो रेफोऽपि न कर्त्तव्य' इति पिङ्गल हलायुधकृत वक्त्रलक्षण श्रुतबोधस्य टीकाग्रन्थे न गृहीतम् । पिङ्गल पथ्यावक्त्रात् श्रुतबोध टीकाया अर्थ प्रभेद ।

७। अथ अनुष्टुभ्भेदाः साङ्केतिक रेखाभिर्दर्श्यन्ते।

| अक्षराणि ८ | पादे | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
|---|---|---|---|---|---|---|---|---|---|
| वक्त्रस्य | अयुक् | (नोनियमः) | [illegible] | [illegible] | | ⏑ | — | — | (नोनियमः) |
| | युक् | | [illegible] | [illegible] | | ⏑ | — | — | |
| पथ्यावक्त्रस्य | अयुक् | | [illegible] | [illegible] | | ⏑ | — | — | |
| | युक् | | [illegible] | [illegible] | | ⏑ | — | ⏑ | |
| चपलायाः | अयुक् | | [illegible] | [illegible] | [illegible] | ⏑ | ⏑ | ⏑ | |
| | युक् | | [illegible] | [illegible] | | ⏑ | — | — | |
| † विपुलायाः | अयुक्* | | [illegible] | [illegible] | | * | * | * | |
| | युक् | | [illegible] | [illegible] | [illegible] | ⏑ | — | ⏑ | |
| सैतवस्य | अयुक् | | [illegible] | [illegible] | | ⏑ | — | ⏑ | |
| विपुलायाः | युक् | | | [illegible] | | ⏑ | — | ⏑ | |

अनुष्टुभः उदाहरणानि।

१। वक्त्रस्य,

"नवधाराम्बु-संसिक्त-वसुधागन्धि-निःश्वासम्।
किञ्चिदुन्नत-घोणाग्रं, मही कामयते वक्त्रम्॥" इ०।

तथा च,

"दुर्भाषितेऽपि सौभाग्यं, प्रायः प्रकुरुते प्रीतिः।
मातुर्मनो हरत्येव, दौर्लालित्योक्तिभिर्बालाः॥" इ०।

२। पथ्यावक्त्रस्य, (क)

"नित्यं नीति-नियमस्य, राज्ञो राष्ट्रं न सीदति।
न हि पथ्याशिनः काये, जायन्ते व्याधि-वेदनाः॥" इ०।

* भकार-रेफ-नकार-तकार-भकार-सकारा विकल्पेन भवन्ति। सैतवमते नकारः।

† चतुर्थो वर्णः प्रायेण गुरुर्भवति।

एकीयमते च, (ख)

"भर्त्तुराज्ञानुवर्त्तिनी, या स्त्री स्यात् सा स्थिरा लक्ष्मीः ।
स्वप्रभुत्वाभिमानिनी, विपरीता परित्याज्या ॥" छ० ।

अपि च, (क)

"मा निषाद प्रतिष्ठांत्वमगमः शाश्वतीः समाः ।
यत् क्रौञ्च-मिथुनादेकमवधीः काममोहितम् ॥" रामा० ।
"भवेत् स गुरु-तल्पी च, ब्रह्महा च स वै भवेत् ।
सुरापानं स कुर्य्याच्च, यो हन्याच्छरणागतम् ॥" महाभारतम् ।
"तत् साधुकृत-सन्धानं, प्रतिसंहर सायकम् ।
आर्त्तत्राणाय ते शस्त्रं, न प्रहर्त्तुमनागसि ॥
यदुत्तिष्ठति वर्णेभ्यो, नृपाणां क्षयि तत् फलम् ।
तपःषड्भागमक्षय्यं, ददत्यारण्यका हि नः ॥" शकु० ।
"मृत्युर्जन्मवतां वीर, देहेन सह जायते ।
अद्य वाब्दशतान्ते वा, मृत्युर्वै प्राणिनां ध्रुवः ॥" भागवतम् ।
"दिव्यं चूतरसं पीत्वा, न गर्व्वं याति कोकिलः ।
पीत्वा कर्द्दमपानीयं, भेको मकमकायते ॥" वररुचिः ।
"क्वचिद्रुष्टः क्वचित्तुष्टो, रुष्टस्तुष्टः क्षणे क्षणे ।
अव्यवस्थित-चित्तस्य, प्रसादोऽपि भयङ्करः ॥" घटकर्परः ।

३ । चपलावक्त्रस्य,

"पीयमाणाधरदशना, वक्र-निर्मांस-नासाया ।
कन्यका वाक्यचपला, भवति धूर्त्त-सौभाग्यम् ॥", छ० ।

४ । विपुलावक्त्रस्य, (क) सैतवमते,

"सैतवेन पयार्णवं, तीर्णो दशरथात्मजः ।
रक्षःक्षयकरीं पुनः, प्रतिज्ञां स्वेन बाहुना ॥" छ० ।

तथा च मन्त्र ब्राह्मणे, १म प्रपाठके,

"यदेतद्धृदयं तव, तदस्तु हृदयं मम।
यदिदं हृदयं मम, तदस्तु हृदयं तव॥" ३ख० ९।
"अग्निष्टे हस्तमग्रहीत्, सविता हस्तमग्रहीत्।
अर्यमा हस्तमग्रहीन्मित्रस्त्वमसि कर्मणा॥" ६ ख० १५।

(ख) भकारेण,

"इयं सखे चन्द्रमुखी, स्मित-ज्योत्स्ना च मानिनी।
इन्दीवराक्षी हृदयं, दन्दहीति तथापि मे॥
घटे घटे वैश्रवणस्त्वरे, चत्वरे शिवः।
पर्वते पर्वते रामः, सर्वत्र मधुसूदनः॥
देवः स जयति श्रीमान्, दण्डधारी महीपतिः।
यस्य प्रसादाद्भुवनं, शाश्वते पथि तिष्ठति॥" ह०।
"स सत्यवचनाद्राजा, धर्म्म पाशेन संयत.।
विवासयामास सुतं, रामं दशरथ. प्रियम्॥" रामा०।
"एतावदुक्त्वा स तदा, तूष्णीमासीद्भृगूत्तमः।
अथ सूर्य्योऽददत्तस्मै, छत्रोपानहमाशु वै॥" महाभारतम्।
"यथा वशिष्ठाङ्गिरसावृषी प्राचेतसस्तथा।
जनकानां रघूणाञ्च वंशयोरुभयोर्गुरुः॥" उत्तरचरितम्।
"हतस्त्व पात्रसमितिः, खट्वारूढ़ः प्रमादवान्।
पानशौण्डः श्रियं नेता, नात्यन्तीनलसुभ्मनाः॥" भट्टिकाव्यम्।
"विराद्ध एवं भवता, विराद्धा बहुधा च नः।
निर्वर्त्त्यतेऽरिः क्रियया, सः श्रुतश्रवसः सुतः॥" माघः।

(ग) रेफेण,

"लक्ष्मी पतिं लोकनाथं, दयाद्रधरमीश्वरम्।
यज्ञेश्वरं शार्ङ्गपाणिं, प्रणमामि त्रयीं तनुम्॥

"सम्भाव्य त्वामतिभर-क्षमस्कन्धं स बान्धवः ।
सहायमध्वरधुरां, धर्म्मराजो विवक्षते ॥" माघः ।

(ङ) तकारेण,

"वन्दे देवं सोमेश्वरं, जटामुकुटमण्डितम् ।
खट्वाङ्गधरं चन्द्रमःशिखामणि-विभूषितम् ॥
वन्दे कविं श्रीभारविं, लोकसन्तमसच्छिदम् ।
दिवादीपा इवाभान्ति, यस्याग्रे कवयोऽपरे ॥
लोकवत् प्रतिपत्तव्यो, लौकिकोऽर्थः परीक्षकैः ।
लोकव्यवहारं प्रति, सदृशौ बालपण्डितौ ॥" ह० ।

"अब्रह्मचारी ब्रह्मचार्य्यस्नातः स्नातको भवेत् ।
हैमी वा मुद्रिका धार्य्या, शिवमन्त्रेण चार्च्चतु ॥" अग्निपु० ३२४।३।

(च) मकारेण,

"अयात्सरीते वागुच्चैरुवाचामानुषी किल ।
प्राप्तरसपत्नमस्यास्त्वं, सदृशं रूपवर्च्चसा ॥" रामा० ।

"असंशयं मां विमृषें, वैस्रसे धन्विनां वर ।
अवशं विनयाधानं, कार्य्यमद्य मया तव ॥" म० भा० ।

"महाराजव देवो वा, यागं कर्त्तुमलं मुने ।
न सर्व्वसाध्यो यज्ञोऽयं, बहुघ्नो बहुदक्षिणः ॥" ब्रह्मवै० ।

"किं वृकैर्भक्षितो व्याघ्रैः, किं सिंहेन निपातितः ।
चिरायमाणे निष्क्रान्ते, तस्यासीदिति मानसम् ॥" विष्णुपु० ।

"ब्राह्मणाश्चैव गावश्च, कुलमेकं द्विधा कृतम् ।
एकत्र मन्त्रास्तिष्ठन्ति, हविरेकत्र तिष्ठति ॥" अग्निपु० २९१।२७ ।

"इदं गुरुभ्यः पूर्व्वेभ्यो, नमोवाकं प्रशास्महे ।
विन्देम देवतां वाचममृतामात्मनः कलाम् ॥" उ० च० ।

"अटाट्यमानोऽरण्यानीं, ससीतः सहलक्ष्मणः ।
बलाद्बुभुक्षुणोत्क्षिप्य, जह्रे भीमेन रक्षसा ॥" भट्टि० ।

"सखा गरीयान् शत्रुश्च, कृत्रिमस्तौ हि कार्यतः ।
स्यातामभिमौ मित्रे च, सहज-प्राकृतावपि ॥" माघः ।

(छ) सकारेण,

"जिते तु लभते लक्ष्मीं, मृते चापि वराङ्गनाः ।
क्षणविध्वंसिनि काये का चिन्ता मरणे रणे ॥" इ० ।
"स्वागतं स्वानधिकारान्, प्रभावैरवलम्ब्य वः ।
युगपद्युग बाहुभ्यः, प्राप्तेभ्यः प्राज्यविक्रमाः ॥" कु० स० ।
"तच्च द्वादशसाहस्रं, ब्रह्माण्डं तद्विजोऽर्पयेत् ।
भारते पर्व्वसमाप्तौ,वस्त्र गन्ध-स्रगादिभिः ॥"अग्निपु०,२७१।२१।

(ज) सङ्कीर्णायाश्च,

"क्वचित्काले प्रसरता, क्वचिदापत्य विघ्नता ।
शुनेव सारङ्गकुलं, त्वया भिन्नं द्विषां कुलम् ॥" भारविः ।
"उत्तिष्ठमानस्तु परो, नोपेक्ष्यः पथ्यमिच्छता ।
समौ हि शिष्टैराम्नातौ, वर्त्स्यन्तावामयः स च ॥
ततः सपत्नापनयस्मरणानुशयस्फुरा ।
ओष्ठेन रामो रामौष्ठबिम्ब चुम्बन-चुञ्चुना ॥
हृतौ हिडिम्बरिपुणा, राज्ञि द्वैमातुरे युधि ।
चिरस्य मित्रव्यसनी, सुदमो दमघोषजः ॥
ककुम्मिकन्यावक्त्रान्तर्वासलब्धाधिवासया ।
मुखामोदं मदिरया, कृतानुव्याधमुद्धमन् ॥
यासव्यपार्ष्णियाहादि मालायामधिकद्युतिः ।
एकार्थतन्तुप्रोतायां नायको नायकायते ॥" माघः ।

## अथ चतुर्थोऽध्यायः ।

१ । "प्रतिपादं चतुर्वृद्ध्या पदचतुरूर्द्ध्वम्" । पि० ।

"अनुष्टुभः पादादूर्द्ध्वं प्रतिपादं चतुरक्षरवृद्ध्या यद्वृत्तं निष्पद्यते, तत् पदचतुरूर्द्ध्वं नाम । अत्र गुरुलघुविभागो नेष्यते ।" ह० ।

२ । "गावन्त आपीड़ः ।" पि० ।

"गकारो द्वावन्ते चेद्भवतश्चतुर्णामपि पादानां, तत्पदचतुरूर्द्ध्वमापीड़संज्ञकं भवति । अन्ते गुरुद्वयग्रहणादन्व शेषाणां लघुत्वमभ्यनुज्ञातं सूत्रकारेणेति मन्यामहे ।" ह० ।

३ । "आदौ चेत् प्रत्यापीड़ः । प्रत्यापीड़ो गावादौ च ।" पि० ।

"गकारो द्वौ आदौ चेद्भवतश्चतुर्णां पादानां, तदा तत्पदचतुरूर्द्ध्वं प्रत्यापीड़संज्ञं भवति । तस्यैव पदचतुरूर्द्ध्वस्यान्ते आदौ च यदि गकारौ भवतस्तदा प्रत्यापीड़ एव भवति । तदेवं द्विप्रकारः प्रत्यापीड़ो भवति । अत्रापि पूर्ववत् शेषाणां लघुत्वमेव ।" ह० ।

४ । "प्रथमस्य विपर्य्यासे मञ्जरी*लवल्यमृतधाराः ।" पि० ।

"आपीड़ग्रहणं निवृत्तम् । तेनैव समं लघुवराम्यनुज्ञानच । तदेव पदचतुरूर्द्ध्वं प्रथमस्य पादस्य द्वितीयेन विपर्य्यासे मञ्जरी, तृतीयेन विपर्य्यासे

---

* द्वन्द्वगर्भाकरे मञ्जरी कलिकानामधेया ।

लवली, चतुर्थेन विपर्य्यासेऽमृतधारा । केचिदापीड़ादिष्वपि पादविपर्य्यासे सति मञ्जर्य्यादिनामानि इच्छन्ति ।" इ० ।

५। अथ सङ्केतेनैतेषां वर्णसंख्या लघु गुरु संख्या च दर्श्यते ।

| वृत्तनामानि | | पादे अक्षराणि | | | | | |
|---|---|---|---|---|---|---|---|
| | | १मे | २ये | ३ये | ४र्थे | | |
| १ पदचतुरूर्ध्वम् | | ८ | १२ | १६ | २० | प्रथमस्य | |
| २ मञ्जरी | | १२ | ८ | १६ | २० | २येन | विपर्य्यासे |
| ३ लवली | | १६ | १२ | ८ | २० | ३येन | |
| ४ अमृतधारा | | २० | १२ | १६ | ८ | ४र्थेन | |
| ५ आपीड | | ६ | १० | १४ | १८ | अन्ते | गुरुद्वयम् |
| ६ प्रत्यापीड | (क) | ६ | १० | १४ | १८ | आदौ | |
| | (ख) | ४ | ८ | १२ | १६ | अन्ते आदौ च | |

* लघ्वक्षराणि ।

६। अमीषूक्तोदाहरणानि एकादिसंख्याक्रमेण बोद्धव्यानि ।

(१) "तस्याः कटाक्षविक्षेपैः, कम्पिततनुकुटिलैरतिदीर्घैः ।
तत्क्षणादेष इवेन्द्रियशून्यः क्षतचेतन्यः,
पदचतुरूर्ध्वं न चलति पुरुषः पतति सहसैव ॥" इ० ।

(२) "जनयति महतीं प्रीतिं हृदये, कामिनां चूतमञ्जरी ।
मिलदलिचक्रचञ्चुपरिचुम्बितकेसरा,
कोमल-मलयवात-परिनर्त्तित-तरुशिखरस्थिता ॥" इ० ।

(३) "विरहविधुर-हरिणकाक्षना-कपोलोपमं, परिणतिधरं पीतपाण्डुच्छवि ।
लवलीफलं निदाघे,
भवति जगति हिमकर-शीतलमतिस्वादूष्णहरम् ॥" इ० ।

(४) "परिवाञ्छसि कर्णरसायनं सततममृतधाराभिः,
यदि हृदि वा परमानन्दरसम् ।

चेतः शृणु धरणीधरवाणीमश्रुतमर्थीं, तत्काव्यगुणभूयषम् ॥" छ० ।

पूर्वोक्ते श्लोकचतुष्टये गुरुलघुविभागो दर्श्यते।

(५) "कुसुमित-सहकारे, हत हिम-महिम शुचि शशाङ्के ।
विकसित कमल-सरसि मधुसमयेऽस्मिन्,
प्रवससि पथिक हतक यदि भवति तव विपत्तिः ॥" छ० ।

(६, क) "चित्तं मम रमयति, कान्तं वनमिदमुपगिरिनदि ।
कूजन्मधुकर-कलरवतत जनहृति,
पुंस्कोकिल मुखरित-सुरभिकुसुमचिततरुतति ॥" छ० ।

(६, ख) "कान्तावदनसरोज, हृद्यं घनसुरभि-मधु रसाढ्यम् ।
पातु रहसि सततमभिलषति मनो मे,
किञ्चिन्मुकुलित-नयनमविरतमणितरमणीयम् ॥" छ० ।

---

## अथ पञ्चमोऽध्यायः ।

१ । "उद्गतामेकतः स्जौ स्लौ, न्सौ ज्गौ, भ्नौ ज्लौग्, स्जौ स्जौ ग् ।" पि० ।

"यत्र प्रथमे पादे सकार-जकार-सकार लकारैर्दशाक्षराणि भवन्ति, द्वितीये नकार-सकार-जकार-गकारैर्दशैव, तृतीये भकार-नकार जकार-लकार-गकारैरेकादशैव, चतुर्थे पादे सकार जकार सकार-जकार गकारैस्त्रयोदशैव, तद्वृत्तमुद्गता नाम ।" छ० ।

उदाहरणम् "अधिहृतमन्जसा न्युता" इत्येकादशादर तृतीयपादलक्षण पिङ्गलकृतम् ।

छन्दोमञ्जर्य्यां "यजय भनभभा, स्युरयौ" इति दयावरं सचयमती मान्तमिद वक्तव्यम्, उत उद्गता द्विप्रकारा इति। 'यजय मनसभभा स्युरयौ' इति पाठग्रहणे तु सामञ्जस्यम्भवेत् ।

२ । "तृतीयस्य सौरभकं र्नौं भगौ । ललितं नौ स्नौ ।" पि० ।

"उद्गतायास्तृतीये पादे तु विशेषः, रेफ-नकार-भकार-गकारैर्दशाक्षराणि यदा भवन्ति तदा सौरभकं नाम, यदा नौ सौ भवतस्तदा ललितं नाम वृत्तम् ।" हृ० ।

३ । उपस्थितप्रचुपितं पृथगाद्यं म्सौ ज्भौ गौ, स्नौ ज्रौ ग्, नौ स्, नौ न् ज्यौ । वर्द्धमानं नौ स्नौ न्सौ । शुद्ध-विराडृषभं त्ज्रः ।" पि० ।

"यत्र प्रथमे पादे मकार-सकार-जकार-भकारा गकारौ च भवतः, द्वितीये सकार-नकार-जकार-रेफा गकारश्च, तृतीये नकारौ सकारश्च, चतुर्थे त्रयो नकारा जकार-यकारौ च, तदुपस्थितप्रचुपितं नाम वृत्तं भवति ।

| | पादे | अक्षराणि। |
|---|---|---|
| (च) उपस्थितप्रचुपितस्य | १मे | — — — ⌣ ⌣ — ⌣ — ⌣ — ⌣ ⌣ — — |
| | २ये | ⌣ — — ⌣ ⌣ ⌣ — — ⌣ — ⌣ — — |
| | ३ये | ⌣ ⌣ ⌣ ⌣ — ⌣ ⌣ ⌣ — |
| | ४र्थे | ⌣ ⌣ ⌣ ⌣ ⌣ ⌣ — ⌣ — ⌣ — ⌣ ⌣ — — |
| (छ) वर्द्धमानस्य | ३ये | ⌣ ⌣ ⌣ ⌣ ⌣ ⌣ ⌣ ⌣ — ⌣ ⌣ ⌣ ⌣ ⌣ ⌣ ⌣ ⌣ — |
| (ज) शुद्धविराडृषभस्य | ३ये | — — ⌣ ⌣ — ⌣ — ⌣ — |

१। षड्वृत्तोदाहरणानि क-ख-ग-च-छ-ज इति वर्णक्रमेण बोद्धव्यानि।

(क) "अथ तत्र पाण्डुतनयेन, सदसि विहितमधुद्विषः।
मानमसहत न चेदिपतिः, परवृद्धिमत्सरि मनो हि मानिनाम्॥"
माघः।

"मृगलोचना शशिमुखी च, रुचिरदशना नितम्बिनी।
हंसललितगमना ललना, परिणीयते यदि भवेत्कुलोद्गता॥" छ०।

(ख) "विनिवारितोऽपि नयनेन, तदपि किमिहागतो भवान्।
एतदेव तव सौरभकं, यदुदीरितार्थमपि नावबुध्यसे॥" छ०।

(ग) "सततं प्रियंवदमनून-मखलहृदयं गुणोत्तरम्।
सुललितमतिकमनीयतनुं, पुरुषं त्यजन्ति न तु जातु योषितः॥" छ०।

(च) "रामाकामकरेणुका मृगायतनेत्रा, हृदयं हरति पयोधरावनम्रा।
इयमतिशयसुभगा, बहुविध त्रिभुवनकुशला ललिताङ्गी॥" छ०।

(छ) "बिम्बोष्ठी कठिनोन्नतस्तनावनताङ्गी, हरिणीशिशुनयना नितम्बगुर्वी।
मदकलकरिगमना परिणतशशिवदना,
जनयति मम मनसि मुदं मदिराक्षी॥" छ०।

(ज) "कन्येयं कनकोज्ज्वला मनोहरदीप्तिः, शशिनिर्मलवदना विशालनेत्रा।
पीनोरुनितम्बशालिनी, सुखयति हृदयमतिशयं तरुणानाम्॥" छ०।

# षष्ठोऽध्यायः ।

अथार्धसमवृत्तम् ।

१ । "अयुजोर्यदि सौ जगौ युजोः, सभरा लौ यदि सुन्दरी तदा ।" ग० ।
"विषमे ससजा गुरुः समे, सभरा लोऽथ गुरुर्वियोगिनी" इति मल्लिनाथः ।

२ । "वेगवती सौ स्गौ, भौ भ्गौ ग् ।" पि० ।
"विषमे प्रथमाक्षरहीनं, दोधकमेव हि वेगवती स्यात् ।" ग० ।
"सयुगात् सगुरू विषमे चेद्भाविह वेगवती युजि भाद्गौ ।" के० ।

३ । "भद्रविराट् त्जौ गौं, स्तौ ज्गौ ग् ।" पि० ।
"ओजे तपरौ जरौ गुरुश्चेन्-म्सौ ज्गौ गभद्रविराड्भवेदनोजे ।" के० ।
"औपच्छन्दसकान्तःपातित्वेऽपि विशेषसंज्ञार्थमर्द्धसमाधिकारे पाठः ।" ह० ।

४ । "केतुमती स्जौ स्गौ, भौ र्जौ ग् ।" पि० ।
"असमे सजौ सगुरुयुक्तौ, केतुमती समे भरनगाद्गः ।" के० ।

५ । "उपचित्रकं सौ स्लौ ग्, भौ भ्गौ ग् ।" पि० ।
"विषमे यदि सौ सलगा दले, भौ युजि भाद्गुरुकावुपचित्रम् ।" के० ।

६ । "आख्यानिकी तौ ज्गौ ग्, ज्तौ ज्गौ ग् ।" पि० ।
"आख्यानिकी वार्त्ताहारिकोच्यते ।" ह० ।
(क) "आख्यानकी सा प्रकटी-कृतार्थे, यदीन्द्रवज्राचरणः पुरस्तात् ।
उपेन्द्रवज्राचरणास्तथोऽन्ये, मनीषिणोक्ता विपरीतपूर्व्वा ॥" श्रु० ।
(ख) "आख्यानकी तौ जगुरू ग ओजे, जतावनोजे जगुरू गुरुश्चेत् ।
जतौ जगौ गो विषमे समे चेत्, तौ ज्गौ ग एषा विपरीतपूर्व्वा ।" के० ।

७। "विपरीताख्यानिकी त्तौ ज्गौ ग्, तौ ज्गौ ग्।"*
पि०।

८। "द्रुतमध्या भौ भ्गौ ग्, न्जौ ज्यौ।" पि०।

"भत्रयमोजगतं गुरुणी चेद्, युजि च नजौ ज्यथुतौ द्रुतमध्या।" के०।

उपचित्रकात्पर्यैनियमयुक्पादौ पुनस्त्रिष्टुभौ दोधक-सुन्दरभाजो, युक्पादौ जगत्याक्षामरसवचभाजौ च।

९। "हरिणप्लुता सौ स्लौ ग्, न्भौ भ्रौ।" पि०।

"सौ सलौ गय नो भौ भ्रौ भवेद् हरिणप्लुता।" इत्यग्निपुराणे।

"सयुगात्सलघू विषमे गुरुर्युजि नभौ भरकौ हरिणप्लुता।" के०।

"प्रथमाक्षरमाद्यतृतीययोर्द्रुतविलम्बितकस्य हि पादयोः।
यदि नास्ति तदा कमलेक्षणे, भवति सुन्दरि सा हरिणप्लुता॥" श्रु०।

१०। "अपरवक्त्रं नौ लौँ ग्, न्जौ ज्रौ।" पि०।

"अयुजि ननरला गुरुः समे, न्जमपरवक्त्रमिदं ततो जरौ।" के०।

"अस्य वैतालीयान्तर्गतत्वेऽपि विशेषसंज्ञार्थमिहोपन्यासः।" वृ०।

११। "विषमे ससजा यदा गुरू सभरा येन तु मालभारिणीयम्।"
परि०।

१२। "अयुजि ननभभाः समकेऽपि तु, नयुगरयुगलात्तदा कौमुदी।"
परि०।

१३। "पुष्पिताग्रा नौ यौँ, न्जौ ज्रौ ग्।" पि०।

"अयुजि नयुगरेफतो यकारो, युजि च नजौ जरगाश्च पुष्पिताग्रा।"
के०।

---

* आख्यानिका पुनः इन्द्रवज्रोपेन्द्रवज्रोपजातिप्रकरणे नामान्तरेण वेदितव्याः। परन्तु आख्यानिकी पिङ्गलस्य केदारभट्टस्य च ड ड उ-ड उ इति चतुर्भिः पादैः, श्रुतबोधस्य तु ड उ उ उ इत्येते। विपरीताख्यानिकी पिङ्गल-केदारभट्टयोः उ-ड उ ड इति पादचतुष्टयं, श्रुतबोधस्य तु उ ड ड ड इत्येते।

"इयमप्यौपच्छन्दसकान्तर्गता।" छ०।

१४। "यवमती जौं जौं, ज्रौ ज्रौ ग्।"* पि०।

"यवान्विता यवमतीत्यर्थः।" छ०।

१५। "स्यादयुग्मके रजौ रयौ समे चेत्,
जरौ जरौ गुरुर्यवात्परामतीयम्।"* के०।

१६। "यदि विषमे भवतो नजौ जरौ,
सजयाः समे जगुरू मञ्जुसौरभम्।"† परि०।

१७। यवमत्यां सुन्दर्यर्धपरके द्वे वैतालीयान्तर्गते, भद्रविराडाख्यानभारिण्यौपुष्पिताग्रा औपच्छन्दसकान्तर्गता, वेगवती आपातलिकान्तर्गता चेति।

१८। षडर्द्धसमछन्दलक्षणानि रेखाभिः प्रदर्श्यन्ते।

---

* अयुजि अन्त्यलघुः पिङ्गलस्य, अन्त्यगुरुः केदारभट्टस्य इत्येव भेदो दृश्यते।

† श्रीमन्नारायणभट्टेन पाठोऽवलम्बितः। श्रीमता तारानाथतर्कवाचस्पतिना रामतारणशिरोमणिना च धृतः पाठः 'समे तु जगुरुः' इत्यधिकाक्षरदोषेण दूषितः।

| वृत्तनामानि । | पादे | अक्षराणि । |
|---|---|---|
| १ । सुन्दरी । | अयुक् | |
| | युक् | |
| २ । वेगवती | अ० | |
| | यु० | |
| ३ । भद्रविराट् | अ० | |
| | यु० | |
| ४ । केतुमती | अ० | |
| | यु० | |
| ५ । उपचित्रकम् | अ० | |
| | यु० | |
| ६ । आख्यानिकी (पि०) | अ० | |
| | यु० | |
| ७ । विपरीताख्यानिकी (पि०) | अ० | |
| | यु० | |
| ८ । द्रुतमध्या | अ० | |
| | यु० | |
| ९ । हरिणप्लुता | अ० | |
| | यु० | |
| १० । अपरवक्त्रम् | अ० | |
| | यु० | |
| ११ । मालभारिणी | अ० | |
| | यु० | |
| १२ । कौमुदी | अ० | |
| | यु० | |
| १३ । पुष्पिताग्रा | अ० | |
| | यु० | |
| १४ । यवमती (पि०) | अ० | |
| | यु० | |
| १५ । यवमती (के०) | अ० | |
| | यु० | |
| १६ । मञ्जुसौरभम् । | अ० | |
| | यु० | |

१८ । अर्द्धसमवृत्तानामुदाहरणानि । (१) सुन्दर्य्याः,

"किमिवाखिल-लोक-कीर्त्तितं, कथयत्यात्मगुणं बुधो जनः ।
वदितास्ति न यस्य कश्चन, स्वगुणं तेन वदत्यसौ स्वयम् ॥" माघे १६।३१।

(२) वेगवत्याः,

"तव पुञ्ज-नराधिप सेनां, वेगवतीं सहते समरेषु ।
प्रलयोर्मिमिवाभिमुखीं तां, कः सकलक्षितिभृत्त्रिवहेषु ॥" ह० ।

(३) भद्रविराजः,

"यत्पादतले चकास्ति पद्मं, हस्ते वा कुलिशं सरोरुहं वा ।
राजा जगदेकचक्रवर्त्ती, स्याच्छ्रं भद्रविराट् समस्तुतेऽसौ ॥" ह० ।

(४) केतुमत्याः,

"हतभूरिभूमिपतिचिह्नां, युद्धसहस्रलब्धजयलक्ष्मीम् ।
सहते न कोऽपि वसुधायां, केतुमतीं नरेन्द्र तव सेनाम् ॥" ह० ।

(५) उपचित्रकस्य,

"उपचित्रकमत्र विराजते, चूतवनं कुसुमैर्विकसद्भिः ।
परपुष्टविघुष्टमनोहरं, मन्मथकेलिनिकेतनमेतत् ॥" ह० ।

(६) आख्यानिक्याः (पि०), कुमारसम्भवे, माघे च,

इ "वर्णप्रकर्षे सति कर्णिकारं, दुनोति निर्गन्धतया स्म चेतः ।
इ प्रायेण सामग्र्यविधौ गुणानां, पराङ्मुखी विश्वसृजः प्रवृत्तिः ॥'
इ "यामूढवानूढवराहमूर्त्तिः, मुहूर्त्तमादौ पुरुषः पुराणः ।
इ तेनोद्धृते साम्प्रतमचतैव, चतारिणा सम्यगसौ पुनर्भूः ॥"

(क) तथा कुमारसम्भवे आख्यानक्याः, श्रु० ।

इ "एकैव सत्यामपि पुत्रपङ्क्तौ, चिरेण दृष्टेव सुतोत्थितेव ।
उ उपोढपाणिग्रहणेति पित्रोः, उमा विशेषोच्छ्वसितं बभूव ॥"

विपरीताख्यानक्याश्च (शु०), कुमारसम्भवे, ७।२३।

उ "श्रथाङ्गुलीभ्यां हरितालमार्द्रं, माङ्गल्यमादाय मनःशिलाञ्च । इ
इ कर्णावसक्तामलदन्तपत्रं, माता तदीयं मुखमुन्नमय्य ॥" इ

(७) विपरीताख्यानिक्याः (पि०), कुमारसम्भवे, ७।६४।

उ "तमेकदृश्यं नयनैः पिबन्त्यो, नार्यो न जग्मुर्विषयान्तराणि ।इ
उ तथाहि शेषेन्द्रियवृत्तिरासां, सर्वात्मना चक्षुरिव प्रविष्टा ॥" इ

(८) द्रुतमध्यायाः,

"यदपि शीघ्रगति-मृदुगामी, बहुधनवानपि दुःखमुपैति ।
नातिशयत्वरिता न च मन्दो, नृपतिगतिः कथिता द्रुतमध्या ॥"छ० ।

(९) हरिणप्लुतायाः,

"तव पुञ्ज नराधिप विद्विषां, भयविवर्जितकेतुलघीयसाम् ।
रणभूमिपराङ्मुखवर्मिणां, भवति शीघ्रगतिर्हरिणप्लुता ॥" छ० ।

(१०) अपरवक्त्रस्य,

"मम भुजबल-वेग-वेगितः, पततु शरोऽस्य महान् महोरसि ।
व्यपनयतु तनोश्च जीवितं, पततु ततश्च महीं विघूर्णितः ॥" रामा० ।

(११) मालभारिण्याः,

"वसने परिधूसरे वसाना, नियमक्षाममुखी धृतैकवेणिः ।
अतिनिष्करुणस्य शुद्धशीला, मम दीर्घं विरहव्रतं बिभर्ति ॥" मञ्जु० ।

(१३) पुष्पिताग्रायाः,

"इति मतिरुपकल्पिता वितृष्णा, भगवति सात्वत पुङ्गवे विभूम्नि ।
स्वसुखमुपगते क्वचिद्विहर्तुं, प्रकृतिमुपेयुषि यद्भवप्रवाहः ॥"भाग० १।९।३२।

(१४) यवमत्याः (पि०),

"पद्मकन्तु कोमले करे विभाति, प्रशंस्य मत्स्यलाञ्छनं पदे च यस्याः ।
सा यवान्विता भवेद्धनाधिका च, समस्त-बन्धुपूजिता प्रिया च पत्युः ॥" छ० ।

# अथ सप्तमोऽध्यायः ।

—oo—

१ । "शिखैकोनत्रिंशदेकत्रिंशदन्ते ग् ।" पि० ।

"यस्य प्रथमे पादे एकोनत्रिंशदक्षराणि द्वितीये चैकत्रिंशत्, द्वयोरपि पादयोरन्ते प्रत्येकं गुरुः, तद्वृत्तं शिखा नाम । अर्द्धाधिकाराद्द्वितीयमप्यर्द्धं तादृशमेव । अन्ते गिति नियमार्थमेतत् । अन्त एव गुरुर्नान्यत्र । तेनायुक्पादेऽष्टाविंशतिरक्षराणि लघून्यन्ते गुरुरेकः । युक्पादे त्रिंशल्लघवोऽन्ते गुरुश्च ।" ह० ।

"शिखिगुणित-दशलघुरचितमपगत-लघु-युगलमपरमिदमखिलम् ।
सगुरुशकलयुगलकमपि सुपरिघटित-ललितपदविततिर्भवति शिखा ॥"

कें० ।

२ । "खञ्जा महत्ययुजीति ।" पि० ।

"एकत्रिंशदक्षरो विषमः पादः कर्त्तव्यः, एकोनत्रिंशदक्षरश्च समः पादः ।"

ह० ।

"विभिमयविनिहितशकलयुगलकलितपदविततिविरचितगुणनिचया ।
श्रुतिसुखकृदियमपि जगति जिनशिर उपगतवति सति भवति खञ्जा ॥" कें० ।

'जिनशिरः उपगतवति सति खञ्जा खञ्जा नाम छन्दः ।'

१ । इमे द्वे शिखा खञ्जे वृत्तरत्नाकरस्य समग्रमात्राद्वितीयाध्यायान्तर्गते । परन्तु तयोरर्द्धयोः मात्रा न समसङ्ख्यकाः । पिङ्गलेन च सूत्रद्वये शिखा नाम द्वे छन्दसी व्याख्याते, एकमर्द्धसममपरञ्च मालाच्छन्दोऽन्तर्गतं पूर्वमेव २८ पृष्ठे व्याख्यातं, प्राकृतग्रन्थे शिखाखञ्जयोर्येऽन्ये भेदा व्याख्यातास्ते नात्र गृहीताः । अनयोर्भेदद्वयस्यापि वृत्तरत्नाकरीयत्वसंशयमपनेतुमनूद्यते ।

४ । अथ शिखाखञ्जयोर्लघुगुरुसङ्ख्या प्रदर्श्यते ।

| [illegible] | अयुक्पादे | | युक्पादे | |
|---|---|---|---|---|
| | लघूनि | गुरू | लघूनि | गुरू |
| शिखायां | २८ | १ | ३० | १ |
| खञ्जायां | ३० | १ | २८ | १ |

५ । उदाहरणं शिखायाः —

"अभिमत-वकुल कुसुम घनपरिमल मिलदलि मुखरित हरिति मधौ,
सहचर मलयपवन रय तरलित सरसिजरजसि शुचितरणिवितते ।
विकसित विविधकुसुमसुमभरसुरभिगरमदन निहित सकलजने,
ज्वलयति मम हृदयमविरतमिह सुतनु तव विरह दहन विषमशिखा ॥" छ०

उदाहरणं खञ्जायाः —

"अपगतघन विशददशदिशि कृतजनहृशि परिणतकणकपिलकलमे,
प्रविकसितसमकुसुमभरपरिमल सुरभितमरुति शरदि समये ।
शुचिशशिमहसि विहृतसरसिरुहि मुदित मधुलिहि विमलितधरणितले ।
प्रियपरमिह कमलमुखि सुखमनुभवति मम हृदयकमलमधुना ॥" छ० ।

---

## अष्टमोऽध्यायः ।

### अथ समवृत्तम् ।

१ । "ग्लिति समानी । २ । ल्गिति प्रमाणी । ३ । वितानमन्यत् ।" पि० ।

"गकार-लकाराभ्यां यद्वृत्तं समाप्येत तत् 'समानी' नाम । लकार-गकाराभ्यां यद्वृत्तं समाप्येत तत् 'प्रमाणी' नाम, नाराचमित्यपरे । भाभ्यां

समानी-प्रमाणीभ्याम् 'अन्यत्' अष्टाक्षरपादं छन्दो 'वितानं' नाम। किञ्च वितानमन्यदिति ब्रुवन् सूत्रकारो वितानस्यानेकप्रकारतां दर्शयति, अन्यथा वितानं भौ गौ इत्येव विदध्यात्।" इ०।

१। एभिस्त्रिभिः सूत्रैः समानी प्रमाणी वितानानीति त्रीणि साधारणनामान्येवोक्तानि। नत्वनुष्टुभो विशेषकाणि। अन्यथा पिङ्गलाचार्यस्य प्राक्तनग्रन्थगताष्टाक्षरमात्रिकेति विशेषसंज्ञाऽहेतुको भवेत्, सूत्रपञ्चगते 'चित्रपदा भौ गौ' इति सूत्रस्यानावश्यकता स्यात्। अनुमतस्तु 'वितानमन्य'दित्यनेन सूत्रेण कस्यापि विशेषवृत्तस्य लक्षणं नोक्तं, समानी प्रमाणी लक्षणयोरभावविशिष्टमतिव्यापकं नामैव निर्दिष्टम्।

२। अत्र हलायुध कृत समानी प्रमाणी वितानानामुदाहरणानि चोद्ध्रियन्ते।

(क) समान्याः, "वासवोऽपि विक्रमेण यस्समानतां न याति।
तस्य वल्लभेश्वरस्य केन तुल्यता क्रियेत॥

अपि च, ॐ नमो जनार्दनाय पापसङ्घमोचनाय।
दुष्ट-दैत्य-मर्दनाय पुण्डरीकलोचनाय॥"

(ख) प्रमाण्याः, "सरोजयोनिरम्बरे रसातले तथाच्युतः।
तव प्रमाणमीक्षितुं क्षमौ न तौ बभूवतुः॥"

(ग) वितानस्य, "तृष्णां त्यज धर्मं भज पापे हृदयं मा कुरु।
इष्टा यदि लक्ष्मीस्तव शिष्टाननिशं संश्रय॥

द्वितीयञ्च, हृदयं यस्य विशालं गगनाभोगसमानम्।
लभतेऽसौ मणिचित्रं नृपतिर्मूर्ध्नि वितानम्॥

अन्यञ्च, कङ्काल-मालभारिणं कन्दर्प-दर्प-हारिणम्।
संसारबन्धमोचनं वन्दामहे त्रिलोचनम्॥

अपि च, तस्याः स्मरामि सुन्दरं चन्द्रोपमानमाननम्।
कन्दर्प-चाप-भङ्गुर-भ्रू-विभ्रमोपशोभितम्॥

अन्यदतो हि वितानं श्वेतपटेन यदुक्तम्।
चित्रपदापि च भौ गौ तेन गतार्थमिवैतत्॥"

इति घोषकृते छन्दःसारसंग्रहे वृत्तभेदो नाम द्वितीयोऽंशः।

---

# तृतीयोऽंशः ।

---

## प्रथमोऽध्यायः ।

---

अथ समवृत्तभेदाः ।

"'आरभ्यैकाक्षरात्पादादेकैकाक्षरवर्द्धितैः' ।

पादैरुक्थादिसंज्ञं स्याच्छन्दः 'षड्विंशतिं गतम् ।'" के०, ग० ।*

१ । उक्थायां श्रीः । तल्लक्षणं "सो सा जं गो ।" प्रा० । "गुश्रीः ।" के० । साङ्केतिकम् (—) उदाहरणञ्च "श्रीस्ते सास्तात् ।" ग० ।

२ । अत्युक्थायाम्,

१ । कामः स्त्री वा—तल्लक्षणम्, "दीहा बीहा, कामो रामो ।" प्रा० । "गौ स्त्री ।" के० । सां (— —) । यथा—

"तुम्हे तुम्हे सुभं देऊ ।" प्रा० ।

२ । मधु—"लहु जुअ । महु धुअ ॥" प्रा० । सां (⏑ ⏑) ।

३ । मही—"लगो जही । मही कही ॥" प्रा० । सां (⏑ —) ।

४ । सारः—"सार एहु । गो वि रेह ॥" प्रा० । सां (— ⏑) ।

३ । मध्यायाम्,

१ । ताली नारी वा—तल्लक्षणं "तालीए जाणीए । गोकण्णा तीवण्णा ॥" प्रा० । "मो नारी ।" के० । सां (— — —) ।

यथा "गोपानां नारीभिः । श्लिष्टोऽव्यात् कृष्णो वः ॥" ग० ।

२ । प्रिया मृगी वा—"हे पिए लेक्खिए । पक्कुरे तिण्णि रे ॥" प्रा० । "रो मृगी ।" के० । सां (— ⏑ —) ।

---

* पिङ्गलाचार्येण मूलस्य मौक्तिकस्य प्रकरणे एकाक्षरादि षड्विंशत्यक्षरपर्यन्तं छन्दो गीतम् । वैदिके तु नाद्रियते ।

यथा "सा मृगीलोचना । राधिका श्रीपतेः ॥" ग० ।

३ । मणी—"ससो सो ज णीओ । फणिन्दे भणीओ ॥" प्रा० । सां (⌣ – –) ।

४ । रमण:—"सगणो रमणो । सहिओ कहिओ ॥" प्रा० । सां (⌣ ⌣ –) ।

५ । पञ्चाल:—"तक्कार जं दिट्ठ । पञ्चाल उक्किट्ठ ॥" प्रा० । सां (– – ⌣) ।

६ । मृगेन्द्रः—"णरेन्द ठवेहु । मइन्द करेहु ॥"प्रा० । सां (⌣ – ⌣) ।

७ । मन्दरः—"भो जहि सो सहि । मन्दर सुन्दर ॥" प्रा० । सां (– ⌣ ⌣) ।

८ । कमल:—"कमल पभण । सुमुहि णगण ॥" प्रा० । सां (⌣ ⌣ ⌣) ।

४ । प्रतिष्ठायाम्,

१ । तीर्णा कन्या वा—"चारी हारा, अट्ठा काला । चिण्णे कण्णा, जाणे तिण्णा ॥" प्रा० । "ग्मौ चेत्कन्या ।" के० । सां (– – – –) ।

यथा "मालत्कन्या, सैका धन्या । यस्याः कूले, कृष्णोऽखेलत् ॥" ग० ।

२ । सती—"नगि सती ।" ग० । सां (⌣ ⌣ ⌣ –) ।

यथा "सुररिपो, तव पदम् । नमति सा, भवतु सती ॥" ग० ।

३ । धारि,"वण्ण धारि,सुण्णि धारि । विण्णि हारि, दोस मारि ॥"प्रा० । यथा च हलायुधस्य "रं विधाय, लं निधाय । धारि नाम, वृत्तमेहि ॥" सां (– ⌣ – ⌣) ।

४ । नगानी—"पयोहरी, गुरुत्तरो । णगाणिआ,सआणिआ ॥"प्रा० । सां (⌣ – ⌣ –) ।

५ । सुप्रतिष्ठायाम्,

१ । हंसः पङ्क्तिरपरपङ्क्तियां—ममलगम्, "पिंगल दिट्ठो, छन्द उदिट्ठो । कण्ण दुदिण्णो, हंस मुणिज्जो ॥" प्रा० । "भगौ गिति

पङ्क्तिः।" के०। "आद्यचतुर्थं, पञ्चमकं चेत्। यत्र गुरुः, स्यात्साक्षर-
पङ्क्तिः॥" श्रु०। मां (— ◡ ◡ — —)।

२। प्रिया—"मन्नौ: प्रिया।" ग०। मां (◡ ◡ — ◡ —)।

३। सम्मोहा—"संमोहारूपं, दिट्ठो सोभूषम्।
वे कण्णा हारो, भूषन्ता सारो॥" प्रा०। मां (— — — — —)।

४। हारीतः—"चाई हि यन्ते, हारे सजुत्ते।
मज्झेक गन्धो, हारीत बन्धो॥" प्रा०। मां (— — ◡ — —)।

५। यमकम्—"सुपिय भण, सरस मण।
सरह गण, जमक गुण॥"प्रा०। मां (◡ ◡ ◡ ◡ ◡।

---

## अथ द्वितीयोऽध्यायः।

(क) "गायत्रे छन्दसि।" छ०।

### १। "तनुमध्या त्यौ।" पि०।

"अत्र पादान्ते विशेषेण विरामः कर्त्तव्य इत्याम्नायः।" छ०।
"त्यौ चेत्तनुमध्या।" के०।

२। चतुरंशा शशिवदना वा—"ठइ चउवंसा, फणि वइ भासा।
दिअवर कण्णो, फुनरसवण्णो॥" प्रा०। "शशिवदना न्यौ।" के०।
"अगुरुचतुष्कं भवति गुरु द्वौ। घनकुचयुग्मे शशिवदनासौ।" श्रु०।

३। शेषा विद्युल्लेखा, वाणी वा—"चारो कण्णा जं, कण्णा तीण्णा होतं।
हारा छक्का बंधो, सेसारूपा छन्दो॥" प्रा०। "विद्युल्लेखा मो मः।" के०।
"सर्वे चेद्दीर्घा, वाणीति प्रोक्ता सा।" इति टप्पिटीका।

४। वसुमती—"त्सौ चेद्वसुमती।" के०।

५ । सङ्खनारी सोमराजी वा –"कआवणअद्वा, भुअङ्गापअद्वा ।
पआ पाअ चारी, कही सक्खणारी ॥" प्रा० । "द्विया सोमराजी ।" ग० ।
६ । "पिअ डिअ धुअं, सगणेण जुअं । कअवअणपओ, कलकट्ठ ठओ ॥
७ । अक्खरा जेछआ, सा विजोहा पआ । मत्त पंचा दुणा, विण्णि जोहा गणा ॥
८ । कामावआरेण, अद्धेण धारेण । मत्ता दहा सुद्ध, मन्थाण सो बुद्ध ॥
९ । धअं मरवीअ, मणोगुण तीअ रई लहु अन्त, स मालइ कन्त ॥
१० । दिअवर किअ, भणइ सुपिअ । दमणअ गुण, फणिवइ भण ॥" प्रा० ।

११ । सर्वेषां छन्दसां लघुगुरुक्रमो रेखाभिर्दर्श्यते ।

| छन्दसामासां नामधेयानाम् | वर्णानां लघुगुरुक्रम | | | | | |
|---|---|---|---|---|---|---|
| | १ | २ | ३ | ४ | ५ | ६ |
| १ । तनुमध्या | — | — | ⌣ | ⌣ | — | — |
| २ । शशिवदना | ⌣ | ⌣ | ⌣ | ⌣ | — | — |
| ३ । विद्युल्लेखा | — | — | — | — | — | — |
| ४ । वसुमती | — | — | ⌣ | ⌣ | ⌣ | — |
| ५ । सोमराजी | ⌣ | — | — | ⌣ | — | — |
| ६ । डीनम् | ⌣ | ⌣ | — | ⌣ | ⌣ | — |
| ७ । विमोहा | — | ⌣ | — | — | ⌣ | — |
| ८ । मन्थानः | — | — | ⌣ | — | — | ⌣ |
| ९ । मालती | ⌣ | — | ⌣ | ⌣ | — | ⌣ |
| १० । दमनकम् | ⌣ | ⌣ | ⌣ | ⌣ | ⌣ | ⌣ |

## (ख) उष्णिह् ।

### १ । "कुमारललिता ज्सौ ग् ।" पि० ।

"विभियतुभिय यत्युपदेशं वर्णयन्ति । अत्र केचिद् द्वाभ्यां पञ्चभिश्च यतिमिच्छन्ति ।" ह० । "कुमारललिता ज्सग्गाः ।" के० ।

२ । मदलेखा—"म्सौ गः स्यान्मदलेखा ।" के० ।

"तुर्य्यं पञ्चमकं चेद्यत्र स्याल्लघु बाले ।

विद्वद्भिर्मृगनेत्रे प्रोक्ता सा मदलेखा ॥" श्रु० ।

३ । मधुमती—"ननगि मधुमती ।" के० ।

४ । हंसमाला—"सरगैर्हंसमाला ।" के० ।

५ । समानी—"चारि हार किज्जही, तिण्णि गन्ध दिज्जही ।

सत्त अक्खरा ठिआ, सा समाणिआ पिआ ॥

६ । भणउ सुवासउ,* लहु सुविसेसउ । रहचउ मत्तह, भगणहि अन्तह ॥

७ । चरणगण विप्प, पढ़म लइ थप्प । जगण तसु अन्त, भणइ करहन्त ॥

८ । सत्ता दीहा जाणेही, कण्णा तीणो माणेही ।

चाउद्दाहा मत्ताणा, सीसोरूओ छन्दाणा ॥" प्रा० ।

९ । सर्वेषां छन्दसां लघुगुरुक्रमो रेखाभिर्दर्श्यते ।

| छन्दनामानि वर्णितानि | वर्णानां लघुगुरुक्रम. | | | | | | |
|---|---|---|---|---|---|---|---|
| | १ | २ | ३ | ४ | ५ | ६ | ७ |
| १ । कुमारललिता | ⏑ | — | ⏑ | ⏑ | ⏑ | — | — |
| २ । मदलेखा | — | — | — | ⏑ | ⏑ | — | — |
| ३ । मधुमती | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | — |
| ४ । हंसमाला | ⏑ | ⏑ | — | — | ⏑ | — | — |
| ५ । समानी | — | ⏑ | — | ⏑ | — | ⏑ | — |
| ६ । सुवासः | ⏑ | ⏑ | ⏑ | ⏑ | — | ⏑ | ⏑ |
| ७ । करहञ्चम् | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ |
| ८ । शीर्षरूपम् | — | — | — | — | — | — | — |

---

* एसियातिक-समितिस्थपुस्तकेऽत्र पाठ । संस्कृतविद्यालयस्थपुस्तके तु 'सरसा' इति ।

(ग) अनुष्टुभि ।

१ । "माणवकाक्रीडितकं भतौ लगौ ।" पि० ।

"अत्र चतुर्भिश्चतुर्भिश्च यतिरित्याम्नायः ।" ह० ।

"आदिगतन्तुर्य्यगतं पञ्चमकञ्चान्त्यगतम् ।
स्याद्गुरु चेत् तत्कथितं माणवकाक्रीड़मिदम् ॥" श्रु० ।

२ । "चित्रपदा भौ गौ ।" पि० ।

"भौ गिति चित्रपदा गः ।" के० । "अत्र पादान्ते यतिः ।" ह० ।

३ । "विद्युन्माला मौ गौ ।" पि० ।

"सर्वे वर्णा दीर्घा यस्या विश्रामः स्याद्वेदैर्वेदैः ।
विद्वद्वृन्दैर्वीणावाणि व्याख्याता सा विद्युन्माला ॥" श्रु० ।

"अत्र चतुर्भिश्चतुर्भिश्च यतिरित्याम्नायः ।" ह० ।

४ । "हंसरुतं म्नौ गौ ।" पि० ।

"म्नौ गौ हंसरुतमेतत् ।" के० ।

५ । समानिका मल्लिका वा—"हारगन्धबन्धेण, दिट्ठ अट्ठ अक्खरेण ।
मारहार मत्त जाण, मल्लिआ सुछन्द माण ॥" प्रा० ।*

"र्जौ समानिका गलौ च ।" के० । "ग्लौ रजौ समानिका ग ।" ग० ।*

६ । प्रमाणिका नगस्वरूपिणी वा—

"लहू गुरू णिरन्तरा, पमाणि अट्ठ अक्खरा ।
पमाणि दूण किज्जए, णराअ सो भणिज्जए ॥" प्रा० ।

"प्रमाणिका जरौ लगौ ।" के० ।

"द्वितुर्यषष्ठमष्टमं गुरु प्रयोजितं यदा ।
तदा निवेदयन्ति तां बुधा नगस्वरूपिणीम् ॥" श्रु० ।

---

*रामतारर्षादिरीत्या समानिकामल्लिके स्वर्गनिर्दिष्टे । प्रामादिकमिदम् ।

७ । वितानम्—"वितानमाभ्यां यदन्यत् ।" के० ।*

८ । गजगतिः—" 'नभलगा गजगति.' इति कस्यापि ।" ग० ।

९ । नाराचिका—"नाराचिका तरौ लगौ ।" ग० ।

१० । तुङ्गः—"तरलणअणि तुंगो, पढम गण सुरंगो ।
णअण जुअल बद्धो, गुरु जुअल पसिद्धो ॥" प्रा० ।

११ । कमलः—"पढम गण विप्पओ, बिहु तह परेठओ ।
गुरु सहिअ एतिणा, कमल इम भत्तिणा ॥" प्रा० ।

११ । एतेषां छन्दसां लघुगुरुक्रमो रेखाभिर्दर्श्यते ।

| छन्नामानि यथाक्रमं | | वर्णानां लघुगुरुक्रमः | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| | | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
| १ । माणवकाक्रीडितकम् | | — | ⏑ | ⏑ | — | — | ⏑ | ⏑ | — |
| २ । चित्रपदा | | — | ⏑ | ⏑ | — | ⏑ | ⏑ | — | — |
| ३ । विद्युन्माला | | — | — | — | — | — | — | — | — |
| ४ । हंसरुतम् | | — | — | — | ⏑ | ⏑ | ⏑ | — | — |
| ५ । समानिका | | — | ⏑ | — | ⏑ | — | ⏑ | — | ⏑ |
| ६ । प्रमाणिका | | ⏑ | — | ⏑ | — | ⏑ | — | ⏑ | — |
| ७ । वितानम् | बहुरूप | प्र | पु | ष्टे | म | द | मिं | त | च |
| ८ । गजगतिः | | ⏑ | ⏑ | ⏑ | — | ⏑ | ⏑ | ⏑ | — |
| ९ । नाराचिका | | — | — | ⏑ | — | ⏑ | — | ⏑ | — |
| १० । तुङ्गः | | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | — | — |
| ११ । कमलः | | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | — | ⏑ | — |

* मुद्रितमिदं रामतारकशिरोमणिना [illegible] । [illegible] ईसदसम्पन्नमितीयमपास्त । तदिदम् । [illegible] । इत्यायुर्वेद च पुन [illegible] ।

(घ) बृहत्याम् ।

१ । "भुजगशिशुसृता* नौ म् ।" पि० ।

"भुजगशिशुसृता नौ मः ।" के० । "सप्तभिर्द्वाभ्याञ्च यतिरित्याम्नायः ।" छ० ।

२ । "हलमुखी र्नौ स् ।" पि० ।

"रान्सस्राविह हलमुखी ।" के० । "त्रिभिः षड्भिश्च यतिरित्याम्नायः ।" छ० ।

३ । मणिमध्यम्—"स्यान्मणिमध्यं चेद्भमसाः ।" ग० ।

"चम्पकमाला यत्र भवेदन्त्यविहीना प्रेमनिधे ।
छन्दसि दक्षा ये कवयस्तन्मणिमध्यन्ते ब्रुवते ॥" श्रु० ।

४ । भद्रिका—"भद्रिका भवति रो नरौ ।" के० ।

५ । भुजङ्गसङ्गता—"सजरैर्भुजङ्गसङ्गता ।" ग० ।

६ । कमला—"सुपिअ गण रमणिआ, दिअ गण सुअ भणिआ ।
गुरु धरिअ पअ पओ, दह कलअ कमलओ ॥" प्रा० ।

"द्विगुण नगण सहितः सगण इह हि विहितः ।
फणिपतिमतिविमला चितिप भवति कमला ॥" इति वृत्तरत्नावल्याम् ।

७ । रूपमाली—"णाआ राआ जंपे साराए, चारी कण्णा अंते हाराए ।
अट्ठाहारो मत्ता पाआए, रूआमाली छंदो जंपूसे ॥" प्रा० ।

८ । महालक्ष्मीः—"दिट्ठ जोहागणा तिण्णिआ, णाअराएण जा विण्णिआँ ।
मासअट्ठेण पाअट्ठिअं, जाण मुद्धे महालच्छिअं ॥" प्रा० ।

९ । सारङ्गिका—"दिअवर कणो सअणं, पअपअ मत्ता गणणं ।
सर मुणि मत्ता लहिअं, सहि सरगिका कहिअं ॥" प्रा० ।

१० । पविता—"कुन्तीपुत्ता जुअ लहिअं, तीए विप्पो धुअ कहिअं ।
अन्ते हारो जइ जणिअं, पाइत्ता रूअउ कहिअं ॥" प्रा० ।

---

* भता, भुता, इता इतीते च्युतिविषपाठभेदा दृश्यन्ते ।

११ । बिम्बः—"रइअ फणि बिंब एसी, गुरु जुअल सव्व सेसो ।
सिरवि दिअ मज्झ ठाओ, सुणह गुणिए सहाओ ॥"　　प्रा० ।

१२ । तोमरम्—"जसु आइ हत्थ विआण, तसु वे पओहर जाण ।
पभणेइ णाअणरेंद, इम जाण तोमर छंद ॥"　　प्रा० ।

१३ । सर्वेषां छन्दसां लघुगुरुक्रमो रेखाभिर्दर्श्यते ।

| छन्दनामानि छन्दसाम् | वर्णानां लघुगुरुक्रम. | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
| १ । भुजगशिशुसृता | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | — | — | — |
| २ । हलमुखी | — | ⏑ | — | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | — |
| ३ । मणिमध्यम् | — | ⏑ | ⏑ | — | — | — | ⏑ | ⏑ | — |
| ४ । भद्रिका | — | ⏑ | — | ⏑ | ⏑ | ⏑ | — | ⏑ | — |
| ५ । भुजङ्गसङ्गता | ⏑ | ⏑ | — | ⏑ | — | ⏑ | — | ⏑ | — |
| ६ । कमला | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | — |
| ७ । रूपामाली | — | — | — | — | — | — | — | — | — |
| ८ । महालक्ष्मीः | — | ⏑ | — | — | ⏑ | — | — | ⏑ | — |
| ९ । सारङ्गिका | ⏑ | ⏑ | ⏑ | ⏑ | — | — | ⏑ | ⏑ | — |
| १० । पविता | — | — | — | — | ⏑ | ⏑ | ⏑ | ⏑ | — |
| ११ । बिम्बः | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | — | ⏑ | — | — |
| १२ । तोमरम् | ⏑ | ⏑ | — | ⏑ | — | ⏑ | ⏑ | — | ⏑ |

(ढ) पङ्क्तौ ।

१ । "शुद्धविराडम्सौ गौ ।"　पि० ।

"अत्र पादान्ते यतिः ।" ह० । "म्सौ ग्गौ शुद्धविराडिदं मतम् ।" वृ० ।

२ । "पणवो म्नौ यगौ ।" पि० ।

"म्नौ यगौ चेति पणवनामेदम् ।" कै० । "अत्र च पञ्चभिः पञ्चभिर्यतिरित्याम्नायः ।" ह० ।

३ । "रुक्मवती भ्मौ स्गौ ।" पि० । "पादान्ते यतिः ।" ह० ।

"तत्र गुरुः स्यादाद्यचतुर्थं, पञ्चमषष्ठञ्चान्त्यमुपान्त्यम् ।
इन्द्रियवाणैर्यत्र विरामः, सा कथनीया चम्पकमाला ।" श्रु० ।
"भ्मौ सगयुक्तौ रुक्मवतीयम् ।" कै० ।

४ । "मयूरसारिणी र्जौ र्गौ ।" पि० ।

"र्जौ रगौ मयूरसारिणी स्यात् ।" कै० । "अत्र पादान्ते यतिः ।" ह० ।

५ । "मत्ता म्भौ स्गौ ।" पि० । "ज्ञेया मत्ता मभसगयुक्ता ।" कै० ।
"चतुर्भिः षड्भिश्च यतिरित्याम्नायः ।" ह० ।

६ । "उपस्थिता त्जौ ज्गौ ।" पि० ।

"तो जौ गुरुणेयमुपस्थिता ।" कै० ।
"अत्र द्वाभ्यामष्टाभिश्च यतिरित्याम्नायः ।" ह० ।

७ । मनोरमा—"नरजगैर्भवेन्मनोरमा ।" कै० ।

८ । हंसी—"ज्ञेया हंसी मभनगयुता ।" परि० ।
"मन्दाक्रान्ताख्ययतिरहिता, मालङ्कारे यदि भवति या ।
सा विद्वद्भिर्भुवमभिहिता, ज्ञेया हंसी कमलवदने ॥" श्रु० ।

९ । दीपकमाला—"दीपकमाला भ्मौ मता जगौ ।" परि० ।

१० । त्वरितगतिरमृतगतिर्वा—"त्वरितगतिश्च नजनगैः ।" ग० ।
"दिअवर हार पअलिआ, पुणवि तहव्वि अकहिआ ।
वसु लहु वे गुरु सहिआ, अमिअगई धुअ कहिआ ॥" प्रा० ।

११ । संयुता—"जसु आइ हत्थ विआणिओ, तसु वे पओहर जाणिओ ।
गुरुअन्त पिंगल जंपिओ, सहि छंद संयुत थप्पिओ ॥" प्रा० ।

१२ । सारवती—"दीह लहुजुअ दीह लहू, सारवई धुअ छंद कहू ।
अंत पओहर थप्प धआ, चोद्दह मत्त विआमकआ ॥" प्रा० ।

१३ । सुषमा—"कण्णो पढ़मो हत्थो जुअल्लो, कण्णो तिअल्लो हत्थो पअल्लो ।
सोला कलआ छक्का वलआ, एमा सुसमा दिट्ठा सुसमा ॥" प्रा० ।

१४ । अथैषां छन्दसां लघुगुरुक्रमो रेखाभिर्दर्श्यते ।

| छन्दोनामानि पङ्क्तौ | वर्णानां लघुगुरुक्रमः | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |
| १ । शुद्धविराट् | — | — | — | ⌣ | ⌣ | — | ⌣ | — | ⌣ | — |
| २ । पणवः | — | — | — | ⌣ | ⌣ | ⌣ | ⌣ | — | — | — |
| ३ । रुक्मवती चम्पकमाला वा | — | ⌣ | ⌣ | — | — | — | ⌣ | ⌣ | — | — |
| ४ । मयूरसारिणी | — | ⌣ | — | ⌣ | — | ⌣ | — | ⌣ | — | — |
| ५ । मत्ता | — | — | — | — | ⌣ | ⌣ | ⌣ | ⌣ | — | — |
| ६ । उपस्थिता | — | — | ⌣ | ⌣ | — | ⌣ | ⌣ | — | ⌣ | — |
| ७ । मनोरमा | ⌣ | ⌣ | ⌣ | — | ⌣ | — | ⌣ | — | ⌣ | — |
| ८ । हंसी | — | — | — | — | ⌣ | ⌣ | ⌣ | ⌣ | ⌣ | — |
| ९ । दीपकमाला | — | ⌣ | ⌣ | — | — | — | ⌣ | — | ⌣ | — |
| १० । त्वरितगतिरमृतगतिर्वा | ⌣ | ⌣ | ⌣ | ⌣ | — | ⌣ | ⌣ | ⌣ | ⌣ | — |
| ११ । संयुता | ⌣ | ⌣ | — | ⌣ | — | ⌣ | ⌣ | — | ⌣ | — |
| १२ । सारवती | — | ⌣ | ⌣ | — | ⌣ | ⌣ | — | ⌣ | ⌣ | — |
| १३ । सुषमा | — | — | ⌣ | ⌣ | — | — | — | ⌣ | ⌣ | — |

## (च) त्रिष्टुभि ।

१ । "इन्द्रवज्रा तौ जगौ ग् ।" पि० ।

"पादान्ते यतिः ।" हे० ।

"यस्यास्त्रिपट् सप्तममक्षरं स्यात्, ह्रस्वं सुजङ्घे नवमञ्च तद्वत् ।

गत्वा विलज्जीकृतहंसकान्ते, तामिन्द्रवज्रां ब्रुवते कवीन्द्राः ॥" श्रु०।

२। "उपेन्द्रवज्रा जतौ जगौ ग्।" पि०।

"अत्र पादान्ते यतिः।" इ०।

"यदीन्द्रवज्राचरणेषु पूर्वे, भवन्ति वर्णा लघवः सुवर्णे।
अमन्दमाद्यन्मदने तदानी-मुपेन्द्रवज्रा कथिता कवीन्द्रैः ॥" श्रु०।

३। "आद्यन्तावुपजातयः।
अत्रोपजातिर्विविधा विदग्धैः, संयोज्यते तु व्यवहारकाले।
अतः प्रयत्नः प्रथमं विधेयो, नृपेण पुंरत्नपरीक्षणाय ॥" पि०।

"केचिदिदं सूत्रं न्यायोपलक्षणपरं व्याचक्षते। तेन वंशस्थेन्द्रवंशापादयोरपि सङ्करादुपजातयो भवन्ति। तथा शालिनीवातोर्म्मीपादयोः। अन्येषामपि खल्वमीदानां प्रयोगानुसारेणोपजातयो ज्ञेयाः।" इ०।

"यत्र द्वयोरप्यनयोस्तु पादा, भवन्ति सीमन्तिनि चन्द्रकान्ते।
विद्वद्भिराद्यैः परिकीर्त्तिता सा, प्रयुज्यतामित्युपजातिरेषा ॥" श्रु०।

उपजातयस्तु चतुर्दशप्रकारा भवन्तीति एतद्ग्रन्थारम्भकालेऽपि निर्दिष्टम्। इन्द्रवज्रोपेन्द्रवज्रयोः चतुर्दशोपजातीनां चतुर्दश नामानि विभिन्नोक्तानि भाक्तनग्रन्थे। यथा—

१। कीर्त्तिः, उ, इ। इ, इ। गुरुबोधस्य विपरीताख्यानकीयं। २। वाणी, इ, उ। इ, इ।
३। माला, उ, उ। इ, इ। ४। शाला, इ, इ। उ, इ। ५। हंसी, उ, इ। उ, इ।
विपरीताख्यानिकी सा। ६। माया, इ, उ। उ, इ। ७। जाया, उ, उ। उ, इ।
८। बाला, इ, इ। इ, उ। ९। आर्द्रा, उ, इ। इ, उ। १०। भद्रा, इ, उ। इ, उ।
आख्यानिकी चैषा। ११। प्रेमा, उ, उ। इ, उ। १२। रामा, इ, इ। उ, उ।
१३। ऋद्धिः, उ, इ। उ, उ। १४। बुद्धि, इ, उ। उ, उ। गुरुबोधस्याख्यानकीयं।

४। "दोधकं भौ भगौ ग्।"* पि०।

"अत्र पादान्ते यतिः।" इ०।

* पैङ्गलच्छन्दःसूत्रे अनुनाया दोधकनाम्ना च एकमेव छन्दः पुस्तकान्तराद् दृश्यते। अधिकमितदि-[illegible]

"आद्यचतुर्थमहोननितम्बे, सप्तमकन्दशमञ्च तथान्त्यम् ।
यत्र गुरु प्रकटस्मरसारे, तत् कथितन्नु दोधकवृत्तम् ॥"  श्रु० ।

५ । "शालिनी म्तौ तगौ ग् समुद्र ऋषयः ।"  पि० ।

"कृत्तो वर्णौ जायते यत्र षष्ठः, कम्बुग्रीवे तद्वदेवाष्टमान्त्यः ।
विश्रामःस्यात्तन्वि वेदैस्तुरङ्गैः, तां भाषन्ते शालिनीं छान्दसीयाः ॥" श्रु० ।

६ । "वातोर्म्मी म्भौ तगौ ग् ।"  पि० ।

"वातोर्मीयं कथिता म्भौ तगौ गः ।" के० । "चतुर्भिः सप्तभिश्च यतिः ।" वृ० ।

७ । "रथोद्धता र्नौ र्लौ ग् ।" पि० । "पादान्ते यतिः ।" वृ० ।

"आद्यमत्र चरमतस्तृतीयकं, सप्तमञ्च नवमस्तथान्तिमम् ।
दीर्घमिन्दुमुखि यत्र जायते, तां वदन्ति कवयो रथोद्धताम् ॥"  श्रु० ।

८ । "स्वागता र्नौ भगौ ग् ।" पि० ।

"अत्र पादान्ते यतिः ।"  वृ० ।

"अक्षरञ्च नवमन्त्यमश्च, व्यत्ययाद्भवति यत्र विनीते ।
प्राक्तनैः सुनयने यदि सैव, स्वागतेति कविभिः कथिता सा ॥" श्रु० ।

९ । "भ्रमरविलसिता म्भौ न्लौ ग् ।"  पि० ।

"म्भौ न्लौ गः स्याद्भ्रमरविलसितम् ।" के० । "चतुर्भिः सप्तभिश्च यतिः ।" वृ० ।

१० । "वृन्ता नौ स्गौ ग् ।" पि० । "सैव यतिः ।" वृ० ।

"ननसगगुरुरचिता वृन्ता ।"  के० ।

११ । "श्येनी र्जौ र्लौ ग् ।"  पि० ।

"श्येन्युदीरिता रजौ रलौ गुरुः ।" ग० । "अत्र पादान्ते यतिः ।" वृ० ।

१२ । "विलासिनी ज्रौ ज्गौ ग् ।"  पि० ।

१३ । गाथायां, "कुड्मलदन्ती भतौ नगौ गिन्द्रियरसाः ।" पि० ।
"वाणरसैः स्यादभतनमगैः श्रोः । मौक्तिकमाला यदि भतनाद्गौ ।" के० ।*
"स्यादनुकूला भतनगगाश्चेत् ।" ग० ।
१४ । सान्द्रपदम्—"सान्द्रपदं स्याद्भतनगलैश्च ।" परि० ।
१५ । सुमुखी—"नजजलगैर्गदिता सुमुखी ।" के० ।
"दिअवर हार लहू जुअला, वलअ पविट्ठअ हत्थअला ।
पअ कल चोद्दह जं पुअहो, कह वरवसहि हो सुमुहो ॥" प्रा० ।
१६ । भद्रिका—"ननरलगुरुभिश्च भद्रिका ।" यो० ।
१७ । मोटनकम्—"स्यान्मोटनकं तजजाश्च लगौ ।" ग० ।
१८ । उपस्थितं शिखण्डितं वा—
"उपस्थितमिदं जसौ ताद् गकारौ ।" के० ।
"शिखण्डितमिदं जसौ तगौ गुरुश्चेत् ।" परि० ।
१९ । उपचित्रम्—"उपचित्रमिदं सससाल्लगौ ।" के० ।
२० । कुपुरुषजनिता—"कुपुरुषजनिता ननौ गौं गः ।" के० ।
२१ । अनवसिता—"अनवसिता न्यौ भगौ गुरुरन्ते ।" के० ।
२२ । विध्वङ्कमाला—"विध्वङ्कमाला भवेत्तौ तगौ ग. ।" परि० ।
२३ । दमनकम्—"दिअवर जुअ लहु जुअलं, पअ पअ पअलिअ वलअं ।
चउपअ चउवसु कलअं, दमणअ भण फणिभणिअं ॥" प्रा० ।
२४ । मालतीमाला—
"कुन्तीपुत्ता पंचा दिण्णा जाणीआ, अन्ते कन्ता एक्का हारा माणीआ ।
पापापाआ मत्ता पत्ता बाईसा, मालत्तीमाला जंपत्ता णाएसा ॥" प्रा० ।
२५ । द्रुमा—"रण जेन सेन नगयोर्द्रुता ।"
२६ । इन्दिरा—"नररलैर्गुराविन्दिरा मता ।"
[illegible]रामभिधत्ते [illegible] ।

---

* इन्द्रवज्रायां(?) [illegible] मौक्तिकमालाख्या च एकमेव वृत्तं व्याख्यातम् । [illegible] च अनुकूला च कुड्मल दन्तिनी नामान्तराणि ।

| वृत्तनामानि त्रिष्टुभि | वर्णानां लघुगुरुक्रमः | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | |
| १ । इन्द्रवज्रा | — | — | ⏑ | — | — | ⏑ | ⏑ | — | ⏑ | — | — | *कस्मिंश्चित् पादे गुरुः कस्मिंश्चिदपि लघुर्भवति । |
| २ । उपेन्द्रवज्रा | ⏑ | — | ⏑ | — | — | ⏑ | ⏑ | — | ⏑ | — | — | |
| ३ । उपजातयश्चतुर्दश | * | — | ⏑ | — | — | ⏑ | ⏑ | — | ⏑ | — | — | |
| ४ । दोधकम् | — | ⏑ | ⏑ | — | ⏑ | ⏑ | — | ⏑ | ⏑ | — | — | |
| ५ । शालिनी | — | — | — | — | — | ⏑ | — | — | ⏑ | — | — | |
| ६ । वातोर्म्मी | — | — | — | — | ⏑ | ⏑ | — | — | ⏑ | — | — | |
| ७ । रथोद्धता | — | ⏑ | — | ⏑ | ⏑ | ⏑ | — | ⏑ | — | ⏑ | — | |
| ८ । स्वागता | — | ⏑ | — | ⏑ | ⏑ | ⏑ | — | ⏑ | ⏑ | — | — | |
| ९ । भ्रमरविलसिता | — | — | — | — | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | — | |
| १० । वृन्ता | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | — | — | — | |
| ११ । श्येनी | — | ⏑ | — | ⏑ | — | ⏑ | — | ⏑ | — | ⏑ | — | |
| १२ । विलासिनी | ⏑ | — | ⏑ | — | ⏑ | — | ⏑ | — | ⏑ | — | — | |
| १३ । कुड्मलदन्ती यीर्वा † | — | ⏑ | ⏑ | — | — | ⏑ | ⏑ | ⏑ | ⏑ | — | — | †मौक्तिकमाला अनुकूला वा । |
| १४ । सान्द्रपदम् | — | ⏑ | ⏑ | — | — | ⏑ | ⏑ | ⏑ | ⏑ | — | ⏑ | |
| १५ । सुमुखी | ⏑ | ⏑ | ⏑ | ⏑ | — | ⏑ | ⏑ | — | ⏑ | ⏑ | — | |
| १६ । भद्रिका | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | — | ⏑ | — | ⏑ | — | |
| १७ । मोटनकम् | — | — | ⏑ | ⏑ | — | ⏑ | ⏑ | — | ⏑ | ⏑ | — | |
| १८ । उपस्थितं शिखण्डितं वा | ⏑ | — | ⏑ | ⏑ | ⏑ | — | — | — | ⏑ | — | — | |
| १९ । उपचित्रम् | ⏑ | ⏑ | — | ⏑ | ⏑ | — | ⏑ | ⏑ | — | ⏑ | — | |
| २० । कुमुदप्रभिता | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | — | ⏑ | — | — | — | |
| २१ । अनवसिता | ⏑ | ⏑ | ⏑ | ⏑ | — | — | — | ⏑ | ⏑ | — | — | |
| २२ । विध्वङ्कमाला | — | — | ⏑ | — | — | ⏑ | — | — | ⏑ | — | — | |
| २३ । दमनकम् | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | ⏑ | — | |
| २४ । मालतीमाला | — | — | — | — | — | — | — | — | — | — | — | |
| २५ । द्रुता | — | ⏑ | — | ⏑ | — | ⏑ | ⏑ | ⏑ | — | ⏑ | — | |
| २६ । इन्दिरा | ⏑ | ⏑ | ⏑ | — | ⏑ | — | — | ⏑ | — | ⏑ | — | |

# अथ तृतीयोऽध्यायः ।

—oo—

१ । "चतुःशतमुत्कृतिः । २ । चतुरश्चतुरस्त्यजेदुत्कृतेः । ३ । तान्यभिसंव्याप्रेभ्यः कृतिः । ४ । प्रकृत्या च । ५ । धृत्यष्टि-शर्करी-जगत्यः । ६ । पृथक् पृथक् पूर्वत एतान्येषाम् । ७ । द्वितीयं द्वितीयमतितः ।" पि० ।

"१ । यत्र चतुःशतमक्षराणां संख्या भवति तत् उत्कृतिर्नामच्छन्दः । २ । उत्कृतेरारभ्य चतुर्भिश्चतुर्भिरक्षरैर्न्यूनानि छन्दांसि अन्यानि स्थापयेत्, अष्टचत्वारिंशदक्षरं यावत् । ३ । तानि, अभि सं वि आङ् प्र इत्येतेभ्यः पराणि कृतिसंज्ञानि भवन्ति, तत्र शताक्षरं छन्दोऽभिकृतिः, षण्णवत्यक्षरं संकृतिः, द्वानवत्यक्षरं विकृतिः, अष्टाशीत्यक्षरमाकृतिः, चतुरशीत्यक्षरं प्रकृतिः । ४ । 'प्रकृत्या' स्वरूपेणैव, तेन अशीत्यक्षरं कृतिः । ५ । कृतेरधस्तात्धृति अष्टि शर्करी जगती इत्येते शब्दाः क्रमेण व्यवस्थापनीयाः । ६ । धृतिशब्दात्पूर्वं धृतिशब्दः, अष्टिशब्दात्पूर्वमष्टिशब्दः, शर्करीशब्दात्पूर्वं शर्करीशब्दः, जगतीशब्दात्पूर्वं जगतीशब्दः । ७ । द्वितीयं द्वितीयं शब्दरूपमतिशब्दात्परतः प्रयोक्तव्यम् । तत्र षट्सप्तत्यक्षरमतिधृतिः, द्वासप्तत्यक्षरं धृतिः, अष्टषष्ट्यक्षरमत्यष्टिः, चतुःषष्ट्यक्षरमष्टिः, षष्ट्यक्षरमतिशर्करी, षट्पञ्चाशदक्षरं शर्करी, द्वापञ्चाशदक्षरमतिजगती, अष्टचत्वारिंशदक्षरं जगती ।" छ० ।

तत्र जगत्याम् ।

१ । "वंशस्था जतौ ज्रौ ।" पि० । "पादान्ते यतिः ।" छ० ।

"उपेन्द्रवज्राचरणेषु सन्ति चेद् उपान्त्यवर्णा लघवः परे कृताः ।
मदोत्समदभूजित-कामकार्मुके वदन्ति वंशस्थविलं बुधास्तदा ॥" श्रु० ।

२। "इन्द्रवंशा तौ ज्रौ।" पि०। "पादान्ते यतिः।" वृ०।

"यस्यामशोकाङ्कुरपाणिपल्लवे, वशस्थपादा गुरुपूर्ववर्णकाः।
तारुण्यहेलारतिरङ्गलालसे, तामिन्द्रवंशा कवयः प्रचक्षते॥" श्रु०।

३। "द्रुतविलम्बितं नभौ भरौ।"* पि०। "पादान्ते यतिः।"वृ०

"अयि कृशोदरि यत्र चतुर्थकं, गुरु च सप्तमकं दशमन्तथा।
विरतिगञ्च तथैव सुमध्यमे, द्रुतविलम्बितमित्युपदिश्यते॥" श्रु०।

४। "तोटकं सः।" पि०। "पादान्ते यतिः।" वृ०।

"सततीयकषष्ठमनङ्गरते, नवमं विरतिप्रभवङ्गुरु चेत्।
घनपीनपयोधरभारनते, ननु तोटकवृत्तमिदं कथितम्॥" श्रु०।

५। "प्रमिताक्षरा स्जौ सौ।" पि०।

"यदि तोटकस्य गुरु पञ्चमकम्, विहितं विलासिनि तदक्षरकम्।
रससंख्यकङ्गुरु न चेदवने, प्रमिताक्षरेति कविभिः कथिता॥" श्रु०।

६। "भुजङ्गप्रयातं यः।" पि०।

"यदाद्यञ्चतुर्थन्तथा सप्तमं स्यात्, तथैवाक्षरं ह्रस्वमेकादशाद्यम्।
शरच्चन्द्रविद्वेषिवक्त्रारविन्दे, तदुक्तं कवीन्द्रैर्भुजङ्गप्रयातम्॥" श्रु०।

७। "वैश्वदेवी मौ याविन्द्रिय ऋषयः।" पि०।

"पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ।" के०।

८। "कुसुमविचित्रा न्यौ न्यौ।" पि०।

"नयसहितौ न्यौ कुसुमविचित्रा।" के०।

९। "पुटो नौ म्यौ वसुसमुद्राः।" पि०।

"वसुयुगविरतिर्नौ म्यौ पुटोऽयम्।" के०।

* पैङ्गलप्राकृतग्रन्थे द्रुतविलम्बितं सुन्दरीनामोक्तं, श्रविष्ठा च लक्ष्मीधरग्रन्थेति।

१० । "तर्त नौ म्रौ ।" पि० ।

"ललितमभिहितं नौ म्रौ नामतः ।" परि० ।

११ । बहुसंज्ञका—"चञ्चलाचिका नौ रौ ।" पि० ।

पुनर्गाथायां, "गौरी नौ रौ ।" पि० । "पादान्ते यतिः ।" ह० ।

"प्रमुदितवदना भवेन्नौ च रौ ।" के० । "ननररघटिता तु मन्दाकिनी ।" ग० ।

"वसुयुगविरतिर्ननौ रौ प्रभा ।" इति मल्लिनाथः ।

१२ । "स्रग्विणी रः ।" पि० । "पादान्ते यतिः ।" ह० ।

"रैश्चतुर्भिर्युता स्रग्विणी सम्मता ।" के० । 'लक्ष्मीधरा' च । प्रा० ।

१३ । "जलोद्धतगतिर्ज्सौ ज्सौ रसर्त्तवः ।" पि० ।

"रसैर्जसजसा जलोद्धतगतिः ।" के० ।

१४ । "कान्तोत्पीड़ा भ्मौ स्मौ ।" पि० ।

१५ । "वाहिनी त्मौ स्यात्षिकामशराः ।" पि० ।

१६ । "नवमालिनी न्जौ भ्याविति ।" पि० ।

"वसुसप्तर्द्वैर्यतिः ।" ह० । "इह नवमालिका नजभयैः स्यात् ।" के० ।

१७ । गाथायां, "वरतनुर्न्जौ ज्रौ षड्रसाः ।" पि० ।

"भवति नजावथ मालती जरौ ।" ग० ।

१८ । गाथायां, "जलधरमाला भ्मौ स्मौ समुद्रवसवः ।" पि० ।

"अब्ध्यष्टाभिर्जलधरमाला भ्मौ स्मौ ।" के० ।

१९ । गाथायां, "ललना भ्तौ न्सौ इन्द्रियर्षयः ।" पि० ।

"पञ्चभिः सप्तभिश्च यतिः ।" ह० ।

२० । ससना—"पञ्चमुनि भ्मौ सात् ययुता ललना ।" परि० ।

२१। चन्द्रवर्त्म—"चन्द्रवर्त्म निगदन्ति रनभसैः ।" के० ।

२२। प्रियंवदा—"भुवि भवेन्नभजरैः प्रियंवदा ।" के० ।

२३। मणिमाला—"त्यौ त्यौ मणिमालाच्छिन्ना गुहवक्त्रैः ।" के० ।

२४। ललिता—"धीरैरभाणि ललिता तभौ जरौ ।" के० ।

२५। उज्ज्वला—"ननभरसहिता गदितोज्ज्वला ।" के० ।

२६। तामरसम्—"अभिनवतामरसं नजजाद् यः ।" के० ।

२७। द्रुतपदम्—"द्रुतपदं भवति नभनयाथैत् ।" परि० ।

२८। विद्याधारः—"सर्वे मा यस्मिन् सोयं विद्याधारः स्यात् ।" परि० ।

"चारी कसा पाए दिस्सा सब्बा हारा, पाआ अंता दिज्जे कण्णे चारी हारा ।
छ्छावेआमत्ता पत्ता चारोपाआ, विज्जाहारा जंपे सारा णाआराआ ॥" प्रा० ।

२९। पञ्चचामरम्—"लघुर्गुरुर्वदन्ति पञ्चचामरम् ।" परि० ।

३०। सारङ्गः—"सारङ्गसंज्ञं समस्तैस्तकारैस्तु ।" परि० ।

"जं चारि तकार संभेअ उक्किट्ठ, सारंगरूअक सो पिंगले दिट्ठ ।
जा तीणि वीसाम संजुत्त पाए हि, णा जाणिए कत्थि अअक्ख भाएण ॥" प्रा० ।

३१। मौक्तिकदाम—"समस्तसमीरय मौक्तिकदाम ।" परि० ।

"पओहर चारि पसिद्धह तास, तितेरह मत्तह मोत्तिअदाम ।
ण पुव्वहि हार ण दिज्जहि अंत, विड सअ अग्गल छप्पण मत्त ॥" प्रा० ।

३२। मोटकं मोदकं वा—"मोटकनाम समस्तभमीरय ।" परि० ।

"तोटअ छंद विरीअ ठविज्जसु, मोदअ छंदह णाम करिज्जसु ।
चारिगणा भगणा सुपसिद्धउ, पिंगल जंपइ कित्तिअ लुद्धउ ॥" प्रा० ।

३३। तरलनयनम्—"रविलघु तरलनयनमिष्टं ।" परि० ।

"णगण णगण कर चउगुण, सुकइ कमल रइ फणि भण ।
तरलणअणि सरस वलइ, सवगुरुजण णिरवि करइ ॥" प्रा० ।

२४। अतेषां छन्दसां लघुगुरुक्रमो रेखाभिर्दर्श्यते।

<table>
<tr><th rowspan="2">छन्दोनामानि लक्षणम्</th><th colspan="12">वर्णानां अनुक्रमः</th></tr>
<tr><th>१</th><th>२</th><th>३</th><th>४</th><th>५</th><th>६</th><th>७</th><th>८</th><th>९</th><th>१०</th><th>११</th><th>१२</th></tr>
<tr><td>१ । वंशस्था</td><td>⏑</td><td rowspan="2">—</td><td rowspan="2">⏑</td><td rowspan="2">—</td><td rowspan="2">—</td><td rowspan="2">⏑</td><td rowspan="2">⏑</td><td rowspan="2">—</td><td rowspan="2">⏑</td><td rowspan="2">—</td><td rowspan="2">⏑</td><td rowspan="2">—</td></tr>
<tr><td>२ । इन्द्रवंशा</td><td>—</td></tr>
<tr><td>३ । द्रुतविलम्बितम्</td><td>⏑</td><td>⏑</td><td>⏑</td><td>—</td><td>⏑</td><td>⏑</td><td>—</td><td>⏑</td><td>⏑</td><td>—</td><td>⏑</td><td>—</td></tr>
<tr><td>४ । तोटकम्</td><td rowspan="2">⏑</td><td rowspan="2">⏑</td><td rowspan="2">—</td><td rowspan="2">⏑</td><td>⏑</td><td>—</td><td rowspan="2">⏑</td><td rowspan="2">⏑</td><td rowspan="2">—</td><td rowspan="2">⏑</td><td rowspan="2">⏑</td><td rowspan="2">—</td></tr>
<tr><td>५ । प्रमिताक्षरा</td><td>—</td><td>⏑</td></tr>
<tr><td>६ । भुजङ्गप्रयातम्</td><td>⏑</td><td>—</td><td>—</td><td>⏑</td><td rowspan="2">—</td><td rowspan="2">—</td><td rowspan="2">⏑</td><td rowspan="2">—</td><td rowspan="2">—</td><td rowspan="2">⏑</td><td rowspan="2">—</td><td rowspan="2">—</td></tr>
<tr><td>७ । वैश्वदेवी</td><td>—</td><td>—</td><td>—</td><td>—</td></tr>
<tr><td>८ । कुसुमविचित्रा</td><td>⏑</td><td>⏑</td><td>⏑</td><td>⏑</td><td>—</td><td>—</td><td>⏑</td><td>⏑</td><td>⏑</td><td>⏑</td><td>—</td><td>—</td></tr>
<tr><td>९ । पुटः</td><td rowspan="2">⏑</td><td rowspan="2">⏑</td><td rowspan="2">⏑</td><td rowspan="2">⏑</td><td rowspan="2">⏑</td><td rowspan="2">⏑</td><td rowspan="2">—</td><td rowspan="2">—</td><td rowspan="2">—</td><td>⏑</td><td>—</td><td>—</td></tr>
<tr><td>१० । ततम्</td><td>—</td><td>⏑</td><td>—</td></tr>
<tr><td>११ । चञ्चलाक्षिका</td><td>⏑</td><td>⏑</td><td>⏑</td><td>⏑</td><td>⏑</td><td>⏑</td><td rowspan="2">—</td><td rowspan="2">⏑</td><td rowspan="2">—</td><td rowspan="2">—</td><td rowspan="2">⏑</td><td rowspan="2">—</td></tr>
<tr><td>१२ । स्रग्विणी</td><td>—</td><td>⏑</td><td>—</td><td>—</td><td>⏑</td><td>—</td></tr>
<tr><td>१३ । जलोद्धतगतिः</td><td>⏑</td><td>—</td><td>⏑</td><td>⏑</td><td>⏑</td><td>—</td><td>⏑</td><td>—</td><td>⏑</td><td>⏑</td><td>⏑</td><td>—</td></tr>
<tr><td>१४ । कान्तोत्पीडा</td><td>—</td><td>⏑</td><td>⏑</td><td>—</td><td>—</td><td>—</td><td>⏑</td><td>⏑</td><td>—</td><td>—</td><td>—</td><td>—</td></tr>
<tr><td>१५ । वाहिनी</td><td>—</td><td>—</td><td>⏑</td><td>—</td><td>—</td><td>—</td><td>—</td><td>—</td><td>—</td><td>⏑</td><td>—</td><td>—</td></tr>
<tr><td>१६ । नवमालिनी</td><td>⏑</td><td>⏑</td><td>⏑</td><td>⏑</td><td>—</td><td>⏑</td><td>—</td><td>⏑</td><td>⏑</td><td>⏑</td><td>—</td><td>—</td></tr>
<tr><td>१७ । वरतनुर्मालती वा</td><td>⏑</td><td>⏑</td><td>⏑</td><td>⏑</td><td>—</td><td>⏑</td><td>⏑</td><td>—</td><td>⏑</td><td>—</td><td>⏑</td><td>—</td></tr>
<tr><td>१८ । जलधरमाला</td><td>—</td><td>—</td><td>—</td><td>—</td><td>⏑</td><td>⏑</td><td>⏑</td><td>⏑</td><td>—</td><td>—</td><td>—</td><td>—</td></tr>
<tr><td>१९ । ललना, पि०</td><td>—</td><td>⏑</td><td>⏑</td><td>—</td><td>—</td><td>⏑</td><td>⏑</td><td>⏑</td><td>⏑</td><td>⏑</td><td>⏑</td><td>—</td></tr>
<tr><td>२० । ललना, परि०</td><td>—</td><td>⏑</td><td>⏑</td><td>—</td><td>—</td><td>—</td><td>⏑</td><td>⏑</td><td>—</td><td>⏑</td><td>⏑</td><td>—</td></tr>
<tr><td>२१ । चन्द्रवर्त्म</td><td>—</td><td>⏑</td><td>—</td><td>⏑</td><td>⏑</td><td>⏑</td><td>—</td><td>⏑</td><td>⏑</td><td>⏑</td><td>⏑</td><td>—</td></tr>
<tr><td>२२ । प्रियंवदा</td><td>⏑</td><td>⏑</td><td>⏑</td><td>—</td><td>⏑</td><td>⏑</td><td>⏑</td><td>—</td><td>⏑</td><td>—</td><td>⏑</td><td>—</td></tr>
<tr><td>२३ । मणिमाला</td><td>—</td><td>—</td><td>⏑</td><td>⏑</td><td>—</td><td>—</td><td>—</td><td>—</td><td>⏑</td><td>⏑</td><td>—</td><td>—</td></tr>
<tr><td>२४ । ललिता</td><td>—</td><td>—</td><td>⏑</td><td>—</td><td>⏑</td><td>⏑</td><td>⏑</td><td>—</td><td>⏑</td><td>—</td><td>⏑</td><td>—</td></tr>
</table>

५। दुर्म्मिलं चतुर्विंशत्यचरं, यथा—

"पहु दिज्जिअ रज्ज-टोप्पर मत्थअ कंकण वाहु किरीट सिरे.
पहि कण्णहि कुंडल नू रहमंडल ठाविअ हार फुरंत उरे।
पइ अंगुलि मुद्दहि-हीरहि सुंदरिकंचणरज्जु सुमज्झतणू,
तसु तूणउ सुंदर किज्जअ मंदर तावह वाणह सेसघणू॥" प्रा०।

६। कुसुमस्तवकाख्यो दण्डकः सप्तविंशत्यचरस्तदधिकाचरो वा, यथा—

"विरराज यदीयकरः कनकद्युतिवन्धुरवामदृशः कुचकुड्मलगो,
भ्रमरप्रकरेण यथावृतमूर्त्तिरशोकलताविलसत्कुसुमस्तवकः।
स नवीनतमालदलप्रतिमच्छवि विभ्रदतीव विलोचनहारि वपुः,
चपलारुचिरांशुकवल्लिधरो हरिरस्तु मदीयहृदम्बुजमध्यगतः॥" ग०।

(झ) जगणवर्गः। मो (⏑ — ⏑)। पाश्चात्त्यनाम Ămphibrăch.

१। मृगेन्द्रस्त्र्यचरो, यथा—"दुरंत, वसंत। सुकंत, दिगंत॥" प्रा०।

२। मालती षड़चरा, यथा—

"करा पसरंत, बहुगुणमंत। पफुल्लिअ कुंद, उगू रहि चंद॥" प्रा०।

३। मौक्तिकदाम द्वादशाचरं, यथा—

"कआ भअ दुव्वर तेज्जि गरास, खणो खण जाणिअ दोह णिसास।
कुहुरव ताव दुरंत वसंत, कि णिह्अ काम कि णिहअ कंत॥" प्रा०।

(ञ) भगणवर्गः। मो (— ⏑ ⏑)। पाश्चात्त्यनाम Dăctyl.

१। मन्दरस्त्र्यचरो, यथा—"सो हर, तोहर। संकट संहर॥" प्रा०।

२। मोदकं द्वादशाचरं, यथा—

"गज्जउ मेह कि अंबर सामर, फुल्लउ णीव कि भम्मउ भामर।
एकल जीअ पराहिण अम्मह, कीलउ पाउस कीलउ मम्मह॥" प्रा०।

३। मदिरान्त्यगुरुयहीना द्वाविंशत्यचरा, यथा—

"माधवमासि विकस्वरकेसरपुष्पलसन्मदिरामुदितैः,
भृङ्गकुलैरुपगीतवने वनमालिनमालि कलानिलयम्।

कुञ्जगृहोदरपल्लवकल्पिततल्पमनल्पमनोजरसम्,
तं भज माधविकामृदुनर्त्तनयामुनयातकलोपगमा ॥" ग० ।

४ । किरीटं चतुर्विंशत्यक्षरं, यथा—
"वप्पच उक्कि सिरे जिणि लिज्जिअ तेज्जिअ रज्ज वणंत चले विण
सोअर सुंदरि सगाहि लज्जिअ एक्कन्नि मारु विराध-कवंधअ ।
संगक मारुद मिल्लअ वालि वहिल्लिअ रज्ज सुगीवह दिज्जअ,
वद्ध समुद्द विधासिय रावण सो तुम राहव दिज्जउ णिब्भअ ॥" प्रा० ।

---

# द्वितीयोऽध्यायः ।

---

## अथ मिश्रवर्गः ।

१ । मिश्रवर्गं एतैरेव दशभिर्वर्गैः । एतेषां दशसंख्यकवर्गाणां मध्ये यैः कैश्चिदपि अन्योन्ययोगैः सममात्रकादेशेन वा बहूनि छन्दांस्युत्पद्यन्ते ।

अथ कोऽयं सममात्रकादेश इत्यपेक्षायां—गुरोरेकस्य स्थाने लघुद्वयस्य, लघुद्वयस्य स्थाने गुरोरेकस्य वा, एकचतुष्कलगणस्य स्थानेऽपरचतुष्कलगणस्य च सन्निवेशः सममात्रकादेशः । तथैव पञ्चकलगणस्येति ।

२ । अन्योन्य-योगोदाहरणम् । नाराचकमष्टादशाक्षरं—षड्लघ्वक्षरदमनकेन सह चतूरेफसम्बिधिना योगात् निष्पन्नम्, यथा रघुवंशे, १२।१०४।

द्विलाः र र र र

"रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रियां,
प्रियसुहृदि विभीषणे सङ्गमय्य श्रियं वैरिणः ।
रविसुतसहितेन तेनानुयातः ससौमित्रिणा,
भुजविजितविमानरत्नाधिरूढः प्रतस्थे पुरीम् ॥"

व्रकादेशोदाहरणम् । भागवते दशमस्कन्धे पञ्चत्रिंशे-

कृतवामकपोलो, वल्गितभ्रुरधरार्पित-वेणुम् ।
लिभिराश्चितमार्गं, गोप्य ईरयति यत्र मुकुन्दः ॥ २ ॥
वनिताः सह सिद्धै-र्विस्मितास्तदुपधार्य सलज्जाः ।
ण-समर्पित-चित्ताः, कश्मलं ययुरपस्मृतनीव्यः ॥ ३ ॥
मबलाः शृणुतेदं, हारहास उरसि स्थिरविद्युत् ।
ःयमार्त्तजनानां, नर्म्मदो यर्हि कूजितवेणुः ॥ ४ ॥ क
जहृपा मृगगावो, वेणुवाद्यहृतचेतस आरात् ।
दवला हृतकर्णा, निद्रिता लिखितचित्रमिवासन् ॥ ५ ॥
वकधातुपलाशै-र्बद्धमल्लपरिवर्हविडम्बः ।
सबल आलि स गोपै-र्गाः समाह्वयति यत्र मुकुन्दः ॥ ६ ॥
नगतयः सरितो वै, तत्पदाम्बुजरजोऽनिलनीतम् ।
र्वयमिवाबहुपुण्याः, प्रेमवेपितभुजाः स्तिमितापः ॥ ७ ॥
ख अनुचरैः समनुवर्णितवीर्य्य, आदिपूरुष इवाचलभूतिः ।
ख वनचरो गिरितटेषु चरन्ती-र्वेणुनाह्वयति गाः स यदा हि ॥ ८ ॥
ख वनलतास्तरव आत्मनि विष्णुं, व्यञ्जयन्त्य इव पुष्पफलाढ्याः ।
ख प्रणतभारविटपा मधुधाराः, प्रेमहृष्टतनवो ववृषुः स्म ॥ ९ ॥
दर्शनीयतिलको वनमाला-दिव्यगन्धतुलसीमधुमत्तैः ।
ख अलिकुलैरलघु गीतमभीष्टम्, आद्रियन् यर्हि सन्धितवेणुः ॥ १० ॥ क
सरसि सारसहंसविहङ्गा-श्चारुगीतहृतचेतस एत्य ।
हरिमुपासत ते यतचित्ता, हन्त मीलितदृशो धृतमौनाः ॥ ११ ॥
ख सहबलः स्रगवतंसविलासः, सानुषु क्षितिभृतो व्रजदेव्यः ।
क हर्षयन् यर्हि वेणुरवेण, जातहर्ष उपरम्भति विश्वम् ॥ १२ ॥
ख महदतिक्रमणशङ्कितचेता, मन्दमन्दमनु गर्ज्जति मेघः ।
ग सुहृदमभ्यवर्षत् सुमनोभि-श्छायया च विदधत्प्रतपत्रम् ॥ १३ ॥

ख विविधगोपचरणेषु विदग्धो, वेणुवाद्य उरुधा निजशिक्षा ।
तव सुतः सति यदाधरबिम्बे, दत्तवेणुरनयत् स्वरजातीः ॥ १४ ॥
ख सवनशस्तदुपधार्य्य सुरेशाः, शक्रशर्व्वपरमेष्ठिपुरोगाः ।
कवय आनतकन्धरचित्ताः, कश्मलं ययुरनिश्चिततत्त्वाः ॥ १५ ॥
निजपदाब्जदलैर्ध्वजवज्र-नीरजाङ्कुशविचित्रललामैः ।
व्रजभुवः शमयन् खुरतोदं, वर्ष्मधुर्य्यगतिरीडितवेणुः ॥ १६ ॥
व्रजति तेन वयं सविलास-वीक्षणार्पितमनोभववेगाः ।
कुजगतिं गमिता न विदामः, कश्मलेन कवरं वसनं वा ॥ १७ ॥
मणिधरः क्वचिदागणयन् गा, मालया दयितगन्धतुलस्याः ।
प्रणयिनोऽनुचरस्य कदांसे, प्रक्षिपन् भुजमगायत यत्र ॥ १८ ॥
ख क्वणितवेणुरववञ्चितचित्ताः, कृष्णमन्वसत कृष्णगृहिण्यः ।
ख गुणगणार्णमनुगत्य हरिण्यो, गोपिका इव विमुक्तगृहाशाः ॥ १९ ॥
कुन्ददामकृतकौतुकवेषो, गोपगोधनवृतो यमुनायाम् ।
नन्दसूनुरनघे तव वत्सो, नर्म्मदः प्रणयिनां विजहार ॥ २० ॥
मन्दवायुरुपवात्यनुकूलं, मानयन् मलयजस्पर्शेन । क
वन्दिनस्तमुपदेवगणा ये, वाद्यगीतबलिभिः परिवव्रुः ॥ २१ ॥
वत्सलो व्रजगवां यदगध्रो, वन्द्यमानचरणः पथि वृद्धैः ।
कृत्स्नगोधनमुपोह्य दिनान्ते, गीतवेणुरनुगैरीड़ितकीर्त्तिः ॥ २२ ॥
उत्सवं श्रमरुचापि दृशीना-मुन्नयन् खुररजश्छुरितस्रक् ।
दित्सयैति सुहृदाशिष एष, देवकीजठरभूरुडुराजः ॥ २३ ॥
मदविघूर्णितलोचन ईषत्, मानदः स्वसुहृदां वनमाली ।
ख बदरपाण्डुवदनो मृदुगण्डं, मण्डयन् कनककुण्डललक्ष्म्या ॥ २४ ॥
ख यदुपतिर्द्विरदराजविहारो, यामिनीपतिरिवैष दिनान्ते ।
ख मुदितवक्त्र उपयाति दुरन्तं, मोचयन् व्रजगवां दिनतापम् ॥ २५ ॥"

एषां चतुर्विंशति-श्लोकानां २, ३, ५, ६, २०, २२, २३ इति सप्त श्लोका एव विशुद्धाः स्वागतालक्षणाः । तल्लक्षणमग्रे द्रष्टव्यम् । शेषेषु सप्तदश-

श्लोकेषु क्वचिद्दिलघुस्थाने गुरोरेकस्यादेशेन (४, २१) दशाक्षरपादो (क) जायते, क्वचिद्गुरुस्थाने लघ्वोरादेशेन (७, ८, ९, १३, १४, १५, १९, २४, २५) द्वादशाक्षरपादश्च (ख), क्वचिदेकादशाक्षरपादेऽपि (१३) लघुगुरु-क्रम-विपर्य्यासो (ग) दृश्यते। क्वचिदेकस्मिन् पादे द्वादशाक्षराण्यन्यस्मिन् पादे दशाक्षराणि च वर्त्तन्ते (१०, १२)।

४। मिश्र-वर्गीयाणां कतिपय-सुप्रसिद्धानि छन्दांसि अत्रोदाह्रियन्ते।

दोधकमेकादशाक्षरश्चतुर्भकारमोटकस्य अन्त्यलघुद्वयस्थाने एकगुरोरादेशेन, यथा,—

"या न ययौ प्रियमन्यवधूभ्यः, सा रतरागमभायतमानम्।
तेन सहेह बिभर्त्ति रहः स्त्री, सारतरागमनायत मानम्॥" माघे, ४।४५।

"इत्थमसुं विलपन्तमसुच-दीनदयालुतयावनिपालः।
रूपमदर्शि धृतोऽसि यदर्थं, गच्छ यथेच्छमथेत्यभिधाय॥" नैषधे, १।४१।

५। स्वागतैकादशाक्षरा, दोधकस्य तृतीयचतुर्थयोर्वर्णयोरन्योन्य-विनिमयेन, यथा रघुवंशे,

"शुभ्रपूरणभवः पटुशब्दं-कश्चचार निनदोऽभसि तस्याः।
तत्र स द्विरदबृंहितशङ्की शब्दपातिनमिषुं विससर्ज॥" ९।७३।

६। रथोद्धता चैकादशाक्षरा, स्वागताया नवमदशमयोर्वर्णयोरन्योन्य-विनिमयेन, यथा रघुवंशे,

"तौ पितुर्नयनजेन वारिणा, किञ्चिदुक्षित-शिखण्डकावुभौ।
धन्विनौ तमृषिमन्वगच्छतां, पौरदृष्टिकृत-मार्गतोरणौ॥" ११।५।

७। द्रुतविलम्बितं द्वादशाक्षरं, मोटकस्याद्यान्त्ययोर्वर्णयोरन्योन्य-विनिमयेन, यथा रघुवंशे,

"न कृपणा प्रभवत्यपि वासवे, न वितथा परिहासकथास्वपि।
न च सपत्नजनेष्वपि तेन वा-गपरुषा परुषाक्षरमीरिता॥" ९।५।

८। इन्द्रवज्रैकादशाक्षरा, गुरुद्वयान्ता ततजयुता, यथा शकु०,

"अर्थो हि कन्या परकीय एव, तामद्य सम्प्रेष्य परिग्रहीतुः ।
जातो ममायं विशदः प्रकामं, प्रत्यर्पितन्यास इवान्तरात्मा ॥" चतुर्थेऽङ्के ।

९। उपेन्द्रवज्रा चैकादशाक्षरा, गुरुद्वयान्ता जतजयुता, यथा कुमारसम्भवे ७।१।

"अथौषधीनामधिपस्य वृद्धौ, तिथौ च जामित्रगुणान्वितायाम् ।
समेतबन्धुर्हिमवान्सुतायाः, विवाहदीक्षा-विधिमन्वतिष्ठत् ॥"

तथा च जयदेवस्य गीतगोविन्दे, ४स० २०।

"स्मरातुरां दैवतवैद्यहृद्य, त्वदङ्ग-सङ्गामृत-मात्र-साध्याम् ।
विमुक्त बाधां कुरुषे न राधा मुपेन्द्रवज्रादपि दारुणोऽसि ॥"

१०। "अनन्तरोदीरितलक्ष्मभाजौ, पादौ यदीयावुपजातयस्ताः ।" तासां नामानि पृथग्लक्षणानि च पूर्व्वमुक्तानि, ७० पृष्ठे। तत्रस्थ संख्यानुक्रमेण अत्रस्थोदाहरणानि च बोद्धव्यानि, यथा कुमारसम्भवे प्रथमसर्गे,

(१) "स मानसीं मेरुसखः पितॄणां, कन्यां कुलस्य स्थितये स्थितिज्ञः ।
मेनां मुनीनामपि माननीयाम्, आत्मानुरूपां विधिनोपयेमे ॥ १८ ॥

(२) यः पूरयन् कीचकरन्ध्रभागा-न्दरीमुखोत्थेन समीरणेन ।
उद्गास्यतामिच्छति किन्नराणां, तानप्रदायित्वमिवोपगन्तुम् ॥ ८ ॥

(३) कपोलकण्डूः करिभिर्विनेतुं, विघट्टितानां सरलद्रुमाणाम् ।
यत्र स्रुतक्षीरतया प्रसूतः, सानूनि गन्धः सुरभीकरोति ॥ ९ ॥

(४) उद्वेजयत्यङ्गुलिपार्ष्णिभागा-न्मार्गे शिलीभूतहिमेऽपि यत्र ।
न दुर्वहश्रोणिपयोधरार्त्ता, भिन्दन्ति मन्दां गतिमश्वमुख्यः ॥ ११ ॥

(५) पदं तुषारस्रुतिधौतरक्तं, यस्मिन्नदृष्ट्वापि हतद्विपानाम् ।
विदन्ति मार्गं नखरन्ध्रमुक्तै-र्मुक्ताफलैः केशरिणां किराताः ॥ ६ ॥

(६) सा राजहंसैरिव सन्नताङ्गी, गतेषु लीलाञ्चित-विभ्रमेषु ।
व्यनीयत प्रत्युपदेशलुब्धै-रादित्सुभिर्नूपुरशिञ्जितानि ॥ ३४ ॥

(७) तया दुहित्रा सुतरां सवित्री, स्फुरत्प्रभामण्डलया चकाशे ।
विदूरभूमिर्नवमेघशब्दा-दुद्भिन्नया रत्नशलाकयेव ॥ २४ ॥

(८) यं सर्वशैलाः परिकल्प्य वत्सं, मेरौ स्थिते दोग्धरि दोहदक्षे ।
भास्वन्ति रत्नानि महौषधीश्च, पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥ २ ॥

(९) दिवाकराद्रक्षति यो गुहासु, लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने, ममत्वमुच्चैःशिरसां सतीव ॥ १२ ॥

(१०) अस्त्युत्तरस्यां दिशि देवतात्मा, हिमालयो नाम नगाधिराजः ।
पूर्व्वापरौ तोयनिधी वगाह्य, स्थितः पृथिव्या इव मानदण्डः ॥ १ ॥

(११) अनन्तरत्नप्रभवस्य यस्य, हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते, निमज्जतीन्दोः किरणेष्विवाङ्कः ॥ ३ ॥

(१२) यश्चाप्सरोविभ्रममण्डनानां, सम्पादयित्रीं शिखरैर्बिभर्त्ति ।
बलाहकच्छेदविभक्त-रागा-मकालसन्ध्यामिव धातुमत्ताम् ॥ ४ ॥

(१३) प्रसन्नदिक् पांशुविविक्तवातं, शङ्खस्वनानन्तरपुष्पवृष्टि ।
शरीरिणां स्थावरजङ्गमानां, सुखाय तज्जन्मदिनं बभूव ॥ २३ ॥

(१४) यत्रांशुकाक्षेपविलज्जितानां, यदृच्छया किम्पुरुषाङ्गनानाम् ।
दरीगृहद्वार-विलम्बिबिम्बा-स्तिरस्करिण्यो जलदा भवन्ति ॥ १४ ॥
पर्य्याप्तपुष्पस्तवकस्तनाभ्यः, स्फुरत्प्रवालोष्ठमनोहराभ्यः ।
लतावधूभ्यस्तरवोऽप्यवापु-र्विनम्रशाखाभुजबन्धनानि ॥" ३।३९ ॥

११ । शालिनी चैकादशाक्षरा, मकारद्वयान्ता पञ्चगुर्व्वाद्या, यथा रघुवंशे, ९।६४।

"निर्घातोग्रैः कुञ्जलीनान् जिघांसु-र्ज्यानिर्घोषैः क्षोभयामास सिंहान् ।
नूनं तेषामभ्यसूयापरोऽभू-द्वीर्य्योदये राजशब्दे मृगेषु ॥"

१२ । वंशस्था द्वादशाक्षरा, रेफान्ता जतजयुता, यथा रघुवंशे,
"उमावृषाङ्कौ शरजन्मना यथा, यथा जयन्तेन शचीपुरन्दरौ ।
तथा नृपः सा च सुतेन मागधी, ननन्दतुस्तत्सदृशेन तत्समौ ॥"३।२३॥

तथा च वररुचेः नीतिरत्ने १४,

"वरं वनं व्याघ्रगजेन्द्रसेवितं, द्रुमालयः पत्रफलाम्बुभोजनम्।
तृणानि शय्या वसनञ्च वल्कलम्, न बन्धुमध्ये धनहीनजीवनम्॥"

१३। इन्द्रवंशा च द्वादशाक्षरा, रेफान्ता ततजयुता, यथा माघे १५।८५।

"सम्प्रत्युपेयाः कुशली पुनर्युधः, सस्नेहमाशीरिति भर्तृरीरिता।
सद्यः प्रसन्ना ह्रितयेन नेत्रयोः, प्रत्याचचक्षे गणता भटस्त्रियाः॥"

१४। प्रमिताक्षरा च द्वादशाक्षरा, तोटकस्य पञ्चम-षष्ठयोर्वर्णयोरन्योन्यविनिमयेन, यथा शिशुपालवधे, ९।६।

"प्रतिकूलतामुपगते हि विधौ, विफलत्वमेति बहुसाधनता।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि॥"

१५। सर्व्वेषु मात्रासमकेषु तोटकस्य केषाञ्चिद्वर्णानां सममात्रकादेश उपलभ्यते। यथा गीतगोविन्दे,

१ १ २ २ २ १ २
"स्तनविनिहितमपि हारमुदारम्। सा मनुते कृशतनुरिव भारम्॥
१ १ १ २ २ १ १ २
सरसमसृणमपि मलयजपङ्कम्। पश्यति विषमिव वपुषि सशङ्कम्॥
१ १ १ २ १ १ १ २
श्वसितपवनमनुपमपरिणाहम्। मदनदहनमिव वहति सदाहम्॥
१ १ १ २ १ १ १ २
दिशि दिशि किरति सजलकणजालम्। नयननलिनमिव विगलितनालम्॥ ४।१०।
पश्यति दिशि दिशि रहसि भवन्तम्। तदधरमधुरमधूनि पिबन्तम्॥
त्वदभिसरणरभसेन वलन्ती। पतति पदानि कियन्ति चलन्ती॥
विहितविशदबिसकिसलयवलया। जीवति परमिह तव रतिकलया॥
मुहुरवलोकितमण्डनलीला। मधुरिपुरहमिति भावनशीला॥
त्वरितमुपैति न कथमभिसारम्। हरिरिति वदति सखीमनुवारम्॥
श्लिष्यति चुम्बति जलधरकल्पम्। हरिरुपगत इति तिमिरमनल्पम्॥
भवति विलम्बिनि विगलितलज्जा। विलपति रोदिति वासकसज्जा॥
श्रीजयदेवकवेरिदमुदितम्। रसिकजनं तनुतामतिमुदितम्॥ ६।१०।
स्मरसमरोचितविरचितवेशा। गलितकुसुमदरविलुलितकेशा॥
हरिपरिरम्भणवलितविकारा। कुचकलशोपरितरलितहारा॥

विचलदलककलिताननचन्द्रा । तदधरपानरभसकृततन्द्रा ॥
चञ्चलकुण्डलदलितकपोला । मुखरितरसनजघनगतिलोला ॥
दयितविलोकितलज्जितहसिता । बहुविधकूजितरतिरसरसिता ॥
विपुलपुलकपृथुवेपथुभङ्गा । श्वसितनिमीलितविकसदनङ्गा ॥
श्रमजलकणभरसुभगशरीरा । परिपतितोरसि रतिरणधीरा ॥
श्रीजयदेवभणितहरिरमितम् । कलिकलुषं जनयतु परिशमितम् ॥ ७५० ।
हरिरभिसरति वहति मधुपवने । किमपरमधिकसुखं सखि भवने ॥
तालफलादपि गुरुमतिसरसम् । किं विफलीकुरुषे कुचकलशम् ॥
कति न कथितमिदमनुपदमचिरम् । मा परिहर हरिमतिशयरुचिरम् ॥
किमिति विषीदसि रोदिषि विकला । विहसति युवतिसभा तव सकला ॥" ९५० ।

अत्र (१) इति चिह्नेन गुरोरेकस्य स्थाने लघुद्वयस्य, (२) लघुद्वयस्य स्थाने गुरोरेकस्य, (३) गणस्य स्थानेऽपरचतुष्कलगणस्य चादेशो ज्ञायते ।

१६ । जलोद्धतगतिर्द्वादशाक्षरा, द्विरावृत्त-जगणसगणा, यथा माघे—

ज स ज स

"समीरशिशिरः शिरःसु वसतां, सतां जवनिका निकामसुखिनाम् ।
बिभर्त्ति जनयन्नयं मुदमपामपायधवलाबलाहकततीः ॥" ४।५४।

१७ । पृथ्वी सप्तदशाक्षरा, जलोद्धतगती अन्त्यगुरुहीनयकारद्वययुता, यथा भर्त्तृहरेर्नीतिशतके, २ ।

"लभेत सिकतासु तैलमपि यत्नतः पीडयन्,
पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः ।
कदाचिदपि पर्यटन् शशविषाणमासादये-
न्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥"

१८ । प्रहर्षिणी त्रयोदशाक्षरा, गुरुद्वयान्ता त्रिगुरु-चतुर्लघु-गुरुलघु-गुरुलघुयुता, यथा रघुवंशे, १२।७८।

"क्रोशार्धं प्रकृतिपुरःसरेण गत्वा, काकुत्स्थः स्तिमितजवेन पुष्पकेण ।
शत्रुघ्नप्रतिविहितोपकार्यमार्यः, साकेतोपवनमुदारमध्युवास ॥"

१९ । रुचिरा त्रयोदशाक्षरा, प्रमाणीवर्गीय द्वादशाक्षर पञ्चचामराख्य-वृत्तस्य गुरुषष्ठाक्षरस्थाने लघुद्वयस्यादेशेन, यथाभिज्ञानशकुन्तलसमाप्तौ ।

"प्रवर्त्ततां प्रकृतिहिताय पार्थिवः, सरस्वती श्रुतमहतां महीय्यताम् ।
ममापि च क्षपयतु नीललोहितः, पुनर्भवं परिगतशक्तिरात्मभूः ॥"

२० । कनकप्रभा मञ्जुभाषिणी वा त्रयोदशाक्षरा, रुचिराया द्वितीयाक्षरस्य तृतीयेन, चतुर्थस्य पञ्चमेन च विनिमयात्, यथा रघुवंशे, ८।६८।

"इति विस्मृतान्यकरणीयमात्मनः, सचिवावलम्बितधुरं धराधिपम् ।
परिवृद्धरागमनुबन्धसेवया, मृगया जहार चतुरेव कामिनी ॥"

२१ । मत्तमयूरश्च त्रयोदशाक्षरं, पञ्चगुरु-सम्मोहरूपया द्विराहत-लघुद्वयगुरुद्वय इत्यष्टाक्षराणां योगेनोपलभ्यते । एभिरष्टाक्षरैरपि पिङ्गलाचार्य्योऽन्यतमं वितानाख्यं वृत्तमुदाहरत् । यथा—

"हृदयं यस्य विशालं, गगनाभोगसमानम् ।
लभतेऽसौ मणिचित्रं, नृपतिर्मूर्द्ध्नि वितानम् ॥" छ० ।

मत्तमयूरोदाहरणं रघुवंशे, ८।७५ ।

"हा तातेति क्रन्दितमाकर्ण्य विषण्ण-स्तस्यान्विष्यन् वेतसगूढं प्रभवं सः ।
शल्यप्रोतं प्रेक्ष्य सकुम्भं मुनिपुत्रं, तापादन्तःशल्य इवासीत् क्षितिपोऽपि ॥"

२२ । वसन्ततिलका चतुर्दशाक्षरा, गुरुद्वयान्ता तकार-भकार-जकार-द्वययुता, यथा रघुवंशे, ५।६६।

"रात्रिर्गता मतिमतां वर मुञ्च शय्यां, धात्रा द्विधैव ननु धूर्जगतो विभक्ता ।
तामेकतस्तव बिभर्त्ति गुरुर्विनिद्र-स्तस्या भवानपरधुर्य्यपदावलम्बी ॥"

२३ । मालिनी पञ्चदशाक्षरा, यकारद्वयान्ता षड्लघु-त्रिगुरुयुता, यथा रघुवंशे, ६।८५।

"शशिनमुपगतेयं कौमुदी मेघमुक्तं, जलनिधिमनुरूपं जह्नुकन्यावतीर्णा ।
इति समगुणयोगप्रीतयस्तत्र पौराः, श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥"

२४ । मन्दाक्रान्ता सप्तदशाक्षरा, गुरुद्वयान्ता चतुर्गुरु-पञ्चलघु-तकार-द्वययुता, यथा वररुचेर्नीतिरत्ने, १५ ।

"माध्वीस्त्रीणां दयितविरहे मानिनां मानभङ्गे,
सल्लोकानामपि जनरवे निग्रहे पण्डितानाम् ।
अन्योद्रेके कुटिलमनसां निर्गुणानां विदेशे,
भृत्याभावे भवति मरणं हन्त सम्भावितानाम् ॥"

२५ । शिखरिणी च सप्तदशाक्षरा, लघ्वाद्या पञ्चगुरु-पञ्चलघु-तकार-सकारयुता, यथा उत्तरचरिते, प्रथमेऽङ्के ।

"अपेदं रक्षोभिः कनकहरिणच्छद्मविधिना,
तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि ।
जनस्थाने शून्ये विकलकरणैरार्यचरितै-
रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥"

२६ । हरिणी च सप्तदशाक्षरा, गुर्वन्ता पञ्चलघु-पञ्चगुरु-सकारद्वय-युता, यथा रघुवंशे, ३।७० ।

"अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे,
नृपतिककुदं दत्त्वा यूने सितातपवारणम् ।
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये,
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥"

२७ । शार्दूलविक्रीडितमेकोनविंशत्यक्षरं, मसजसतकारद्वययुतं गुर्वन्तञ्च, यथा भर्तृहरेर्नीतिशतके, ४७ ।

"एते सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये,
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ।
तेऽमी मानुषराक्षसाः परहितं स्वार्थाय विघ्नन्ति ये,
ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥"

२८ । स्रग्धरैकविंशत्यक्षरा गुरुचतुष्टय-यकार-पञ्चलघु-यकारत्रययुता, यथाभिज्ञानशकुन्तलप्रारम्भे ।

"या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री,
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।
यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः,
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥"

२९ । चण्डवृष्टिप्रपातो नाम दण्डकः सप्तविंशत्यक्षरः, षड्लघवश्च सप्तरेफाश्च, यथा—

"इह हि भवति दण्डकारण्यदेशे स्थितिः पुण्यभाजां मुनीनां मनोहारिणी,
त्रिदशविजयिवीर्यदृप्यद्दशग्रीवलक्ष्मीविरामेण रामेण संसेविते ।
जनकयजनभूमिसम्भूतसीमन्तिनीसीमसीतापदस्पर्शपूताश्रमे,
भुवननमितपादपद्माभिधानाम्बिकातीर्थयात्रागतानेकसिद्धाकुले ॥" वृ० ।

३० । प्रचितो नाम दण्डको, रेफोपलक्षिताक्षरत्रयेण वर्द्धितो, यथा—

"प्रथमकथितदण्डकश्चण्डवृष्टिप्रपाताभिधानो मुनेः पिङ्गलाचार्यनाम्नो मतः,
प्रचित इति ततः परं दण्डकानामियं जातिरेकैकरेफाभिवृद्ध्या यथेष्टं भवेत् ।
स्वरुचिरचितसंज्ञया तद्विशेषैरशेषैः पुनः काव्यमन्योऽपि कुर्वन्तु वागीश्वराः,
भवति यदि समानसङ्ख्याक्षरैरेव पादव्यवस्था ततो दण्डकः पूज्यतेऽसौ जनैः ॥"

वृ० ।

---

## तृतीयोऽध्यायः ।

### अथार्द्धसमवृत्तम् ।

१ । छन्दोऽर्थपरपक्षे द्वे वैतालीयान्तर्गते । तयोरप्यन्ते लगौ वर्जिते । शेषाः षण्मात्रा अयुक्पादे छन्दसां मकाररगणयुगैरपरपक्षाश्च मकाराभ्यामेव, युक्पादेऽष्टमात्राः छन्दसां मकारभकाराभ्यामपरपक्षाश्च चतुर्लघुभकारैर्वा, परिपूर्यन्ते ।

२। सर्व्वेष्वेव वैतालीयेषु एतयोः शेषाणां वर्णानां केषाञ्चिदपि सम-मात्रकादेश उपलभ्यते। उदाहरणैस्तत् स्फुटीक्रियते, यथा सुन्दर्य्याः,

"अथ मोहपरायणा सती, विवशा कामवधूर्व्विबोधिता।
विधिना प्रतिपादयिष्यता, नववैधव्यमसह्यवेदनम्॥" कु० स०, ४।१।
"क वयं क परोक्षमन्मथो, मृगशावैः सममेधितो जनः।
परिहासविजल्पितं सखे, परमार्थेन न गृह्यतां वचः॥" शकु०, २य।
"कुसुमैरुपशोभितां सितैर्घनमुक्तास्फुलवप्रकाशितैः।
मधुनः समवेक्ष्य कालतां, भ्रमरश्चुम्बति यूथिकालताम्॥"
घटकर्परः, १८।

अपरवक्त्रस्य, रामायणे अयोध्याकाण्डे,

"भृशमसुखममर्षिता यदा, बहु विललाप समीक्ष्य राघवम्।
व्यसनमुपनिशाम्य सा महत्, सुतमिव बद्धमवेक्ष्य किन्नरी॥" २०।५५।
"मुरजपणवमेघघोषवद्-दशरथवेश्म बभूव यत्पुरा।
विलपितपरिदेवनाकुलं, व्यसनगतं तदभूत् सुदुःखितम्॥" ३८।४१।
"अनुमतगमना शकुन्तला, तरुभिरियं वनवासबन्धुभिः।
परभृतविरुतं कलं यथा, प्रतिवचनीकृतमेभिरीदृशम्॥" शकु० ४र्थ।

वैतालीयस्य,

"क्षुत्क्षीणशरीरसञ्चया, व्यक्तीभूतशिरास्थिपञ्जराः।
कौलैः पक्षैस्तावरयो, वैतालीयतनुं वितन्वते॥" इ०।

३। पुष्पिताग्रा-मालभारिणी-भद्रविराड्वैश्वदेवीपच्छन्दसकान्तर्गताः। पुष्पिताग्राऽपरवक्त्रस्यान्ते, मालभारिणी तु सुन्दर्य्यन्ते, गुरुयुता। मालभारिण्या आद्यलघुद्वयस्थाने गुरोरेकस्यादेशाद्भद्रविराडुत्पद्यते। उदाहरणैस्तत्परि-स्फुटीक्रियते, यथा पुष्पिताग्रायाः भागवते, १।८।४२।

"तमिममहमजं शरीरभाजां, हृदि हृदि धिष्ठितमात्मकल्पितानाम्।
प्रतिदृशमिव नैकधार्कमेकं, समधिगतोऽस्मि विधूतभेदमोहः॥"

"तुरगखुरहतस्तथाहि रेणुर्विटपविषक्तजलार्द्रवल्कलेषु ।
पतति परिणतारुणप्रकाशः, शलभसमूह इवाश्रमद्रुमेषु ॥" शकु० १अं ।
"कतिपयकुसुमोद्गमः कदम्बः, प्रियतमया परिवर्द्धितो य आसीत् ।
स्मरति गिरिमयूर एष देव्याः, स्वजन इवात्र यतः प्रमोदमेति ॥" उ०च० ।

मालभारिण्याः,

"अपरिक्षतकोमलस्य यावत्, कुसुमस्येव नवस्य षट्पदेन ।
अधरस्य पिपासता मया ते, सदयं सुन्दरि गृह्यते रसोऽस्य ॥" शकु० ३अं ।
"सतडिज्जलदार्पितं नगेषु, स्वनदम्भोधरभीतपन्नगेषु ।
परिधीररवं जलं दरीषु, प्रपतत्यद्भुतरूपसुन्दरीषु ॥" घटकर्परः, ४ ।
"व्यपवर्त्तत एष बालवीरः, स्तननान्निर्मथनात्त्वयोपहृतः ।
स्तनयित्नुरवादिभावलीनामवमर्द्दादिव दृप्तसिंहशावः ॥" उ० च० ।

भद्रविराज उदाहरण ५१ पृष्ठे दर्शितम् ।

४ । सर्व्वत्रैवौपच्छन्दसके एतेषां शेषवर्णानां केषाञ्चिदपि समभावव्यादेश उपलभ्यते । यथा घटकर्परकृतयमककाव्ये, १८ ।

"तरुवर विनताऽस्मि ते सदाहं, हृदयं मे प्रकरोषि किं सदाहम् ।
तव कुसुमनिरीक्षणे यदेहं विसृजेयं सहसैव नोपदेहम् ।"

---

## चतुर्थोऽध्यायः ।

### अथ विषमवृत्तम् ।

३ । परन्तु पैङ्गलप्राकृतग्रन्थगतानां कतिपयमात्राच्छन्दसां नामानि लक्षणानि वा श्रुतपथे न दृश्यन्ते, यथा गाहिणी, सौहिणी, उक्कच्छा, रोला, गंधा इत्यादय । प्राकृते उदाहरणमात्रमपि वेदगङ्गादासेन छन्दोमञ्जर्याख्यग्रन्थे दोहा दोहडिका नाम्नाऽवलम्बिता, अत्र ग्रन्थे च २० पृष्ठे दर्शिता । पज्झटिका नारायणभट्टेन वृत्तरत्नाकरटीकाग्रन्थे पज्झटिका-नाम्ना स्वरूपेणैव गृहीता, गङ्गादासेन तु शार्ङ्गधरोद्धृत-प्रणीतानुमतं लक्षणं कृतम् । एषो रूपे च प्रथमेऽष्टमे चतुर्थेऽध्याये दर्शिते । अन्याश्च बहुतिथमात्राच्छन्दोभेदाः पैङ्गलप्राकृतग्रन्थे सोदाहरणलक्षणा दृश्यन्ते, परन्तु केनचिदपि संस्कृतच्छान्दसिकेन नावलम्बिता, अत्र ग्रन्थे च ग्रन्थविस्तरभयान्नोद्धृता. ।

४ । गायत्र्यादित्रिष्टुप्पर्यन्तानि यान्यार्षच्छन्दांसि वैदिकेभ्यो लौकिके गृहीतानि, तान्यपि विषम-वृत्तानि १६ पृष्ठे दर्शितानि ।

५ । सकलान्यपि वैदिकच्छन्दांसि विषमवृत्तानुरूपाणि । अत्र तानि सङ्क्षेपतश्च प्रदर्शितानि । पाद-व्यवस्थादि सविस्तरविवरणं पैङ्गलसूत्रग्रन्थस्य हलायुधकृतटीकायां तृतीयाध्याये, अग्निपुराणे ३३८, ३३९ अध्याययोः, सत्यव्रतसामश्रमिकृतायां छन्दःशास्त्र-टीकाभूमिकायाञ्च द्रष्टव्यम् ।

| अक्षरसंख्या | छन्दोनामानि |
|---|---|
| १ | दैवी गायत्री |
| २ | „ उष्णिक् |
| ३ | „ अनुष्टुप् |
| ४ | „ बृहती |
| ५ | „ पङ्क्तिः |
| ६ | „ त्रिष्टुप्<br>याजुषी गायत्री च |
| ७ | याजुषी उष्णिक्<br>दैवी जगती च |
| ८ | प्राजापत्या गायत्री<br>याजुष्यनुष्टुप् च |
| ९ | याजुषी बृहती<br>आसुरी जगती च |

| अक्षरसंख्या | छन्दोनामानि |
|---|---|
| १० | आसुरी त्रिष्टुप्<br>अल्पशः पङ्क्तिः<br>याजुषी पङ्क्तिश्च |
| ११ | „ त्रिष्टुप्<br>आसुरी पङ्क्तिश्च |
| १२ | „ बृहती<br>याजुषी जगती<br>प्राजापत्योष्णिक्<br>साम्नी गायत्री च |
| १३ | आसुर्यनुष्टुप् |
| १४ | आसुर्युष्णिक्<br>साम्न्युष्णिक् च |
| १५ | आसुरी गायत्री |

| अक्षरसंख्या | छन्दोनामानि |
|---|---|
| १६ | प्राजापत्यानुष्टुप् |
| | साम्नी च |
| १८ | आर्ची गायत्री |
| | साम्नी बृहती च |
| १९ | पिपीलिकमध्या गायत्री |
| | क्रमीयसी " |
| | पदपङ्क्तिः " |
| २० | अक्षरपङ्क्तिः |
| | साम्नी पङ्क्तिः |
| | प्राजापत्या बृहती |
| | पिपीलिकमध्या गायत्री |
| | द्विपाद्विराड् " |
| | अतिनिचृद् " |
| २१ | आर्च्युष्णिक् |
| | पादनिचृद्गायत्री |
| | अतिपादनिचृद्गायत्री |
| | वर्धमाना " |
| | प्रतिष्ठा " |
| २२ | साम्नी त्रिष्टुप् |
| | ककुम्मती गायत्री |
| २३ | शङ्कुमती " |

| अक्षरसंख्या | छन्दोनामानि |
|---|---|
| २४ | आर्षी गायत्री |
| | आर्च्यनुष्टुप् |
| | प्राजापत्या पङ्क्तिः |
| | साम्नी जगती |
| | त्रिपाद्गायत्री |
| | नागी " |
| | वाराही " |
| २५ | पदपङ्क्तिः |
| २६ | पदपङ्क्तिर्गायत्री |
| | स्वराड् " |
| | विराडुष्णिक् |
| २७ | न्यङ्कुशिरोष्णिक् |
| | आर्षी बृहती |
| २८ | चतुष्पादुष्णिक् |
| | ककुबुष्णिक् |
| | पुर उष्णिक् |
| | परोष्णिक् |
| | तनुमध्योष्णिक् |
| | प्राजापत्या त्रिष्टुप् |
| २९ | अनुष्टुब्गर्भोष्णिक् |
| | पिपीलिकमध्योष्णिक् |
| ३० | आर्षी पङ्क्तिः |
| | अविराडनुष्टुप् |
| | विराडनुष्टुप् |

| अक्षरसंख्या | छन्दोनामानि |
|---|---|
| ३१ | महापदपङ्क्तिरनुष्टुप् |
| | विराडनुष्टुप् |
| ३२ | प्राजापत्या जगती |
| | चतुष्पादनुष्टुप् |
| | त्रिपादनुष्टुप् |
| | पिपीलिकमध्यानुष्टुप् |
| ३३ | विराड्गायत्री |
| | आर्ची त्रिष्टुप् |
| ३४ | पिपीलिकमध्या बृहती |
| ३६ | आर्ची जगती |
| | आर्षी बृहती |
| | पथ्या „ |
| | न्यङ्कुसारिणी स्कन्धोग्रीवी |
| | उरोबृहती वा |
| | उपरिष्टाद्बृहती |
| | पुरस्तात् „ |
| | महाबृहती सतोबृहती वा |
| | ब्राह्मी गायत्री |
| ३८ | विराट्स्थाना त्रिष्टुप् |
| ४० | आर्षी पङ्क्तिः |
| | पथ्या „ |
| | सतः „ |
| | आस्तार-„ |
| | प्रस्तार- „ |
| | विष्टार- „ |
| | संस्तार- „ |

| अक्षरसंख्या | छन्दोनामानि |
|---|---|
| ४१ | विराड्रूपा त्रिष्टुप् |
| ४२ | ब्राह्म्युष्णिक् |
| ४३ | पुरोज्योतिस्त्रिष्टुप् |
| | मध्येज्योतिस्त्रिष्टुप् |
| | उपरिष्टाज्ज्योतिस्त्रिष्टुप् |
| ४४ | आर्षी त्रिष्टुप् |
| | पुरोज्योतिर्जगती |
| | मध्येज्योति- „ |
| | उपरिष्टाज्ज्योति-„ |
| | अभिसारिणी त्रिष्टुप् |
| ४८ | आर्षी जगती |
| | ब्राह्म्यनुष्टुप् |
| | षट्पदी जगती |
| | महासतोबृहती |
| | महापङ्क्तिः |
| ५२ | अतिजगती |
| ५४ | ब्राह्मी बृहती |
| ५६ | शक्वरी |
| ६० | ब्राह्मी पङ्क्तिः |
| | अतिशक्वरी |
| ६४ | अष्टिः |
| ६६ | ब्राह्मी त्रिष्टुप् |
| ६८ | अत्यष्टिः |
| ७२ | ब्राह्मी जगती |
| | धृतिः |

| अक्षरसंख्या | छन्दोनामानि | अक्षरसंख्या | छन्दोनामानि |
|---|---|---|---|
| ७६ | अतिधृतिः | ९२ | विकृतिः |
| ८० | कृतिः | ९६ | संकृतिः |
| ८४ | प्रकृतिः | १०० | अभिकृतिः |
| ८८ | आकृतिः | १०४ | उत्कृतिः |

इति यौषकृतौ छन्दःसारसंग्रहे जातिछन्दसमाहारो नाम चतुर्थोऽध्यायः ।

---

समाप्तश्चायं ग्रन्थः ।

# अकारादि-वर्णक्रमेण सूची ।


| | पृष्ठे | पङ्क्तौ |
|---|---|---|
| अक्षरच्छन्दस् | ६ | १२ |
| अक्षरपङ्क्ति | ९१ | १ |
| अचलधृति | ८९ | ३ |
| " | १०७ | १४ |
| अतिच्छन्दांसि | ७९ | १२ |
| अतिजगती | ७३ | १० |
| " | ७९ | १५ |
| अतिधृति | ७४ | १५ |
| " | ९५ | ११ |
| अतिरुचिरा | १० | १३ |
| अतिशर्करी | ७३ | १६ |
| " | ८४ | १६ |
| अतिशायिनी | ९१ | २ |
| अत्यष्टि | ७४ | १६ |
| " | ९० | १ |
| अदुकथा | ५९ | ८ |
| अद्रितनया | १०० | ९ |
| अनङ्गक्रीडा | २७ | १ |
| " शेखर | १०३ | ११ |
| " " | १०९ | १९ |
| अनवसिता | ७१ | १५ |
| अनुकूला | ७१ | ३ |
| अनुष्टुप् | २० | ९ |
| " | ९४ | १ |
| अन्योऽन्ययोग | ११४ | ११ |
| अपरवक्त्रम् | ५१ | ११ |
| " | १२३ | १९ |

| | पृष्ठे | पङ्क्तौ |
|---|---|---|
| अपराजिता | ८२ | १८ |
| अपराक्षिका | १८ | २० |
| अपवाहक | १०३ | १ |
| अभिकृति | ७३ | ९ |
| " | १०२ | १५ |
| अमृतगति | ४८ | ११ |
| " धारा | ४५ | १५ |
| " वारि | ९१ | १० |
| अर्ध | १०२ | १० |
| अर्धर | १०२ | १० |
| अर्धसमवृत्तम् | ४५ | ११ |
| " | ५० | २ |
| " | ११४ | १८ |
| अवितथम् | ९५ | ७ |
| अशोकपुष्पमञ्जरी | १०५ | १९ |
| " | १०८ | १५ |
| अशोकमञ्जरी | १०३ | १८ |
| अश्वगति | ८७ | ११ |
| " | ९५ | ९ |
| अश्वललितम् | १०० | ७ |
| अष्टि | ७४ | १६ |
| " | ८७ | १४ |
| असम्बाधा | ८२ | १६ |
| आकृति | ७४ | १० |
| " | ९९ | १२ |
| आख्यानकी | ५० | १७, १९ |
| " | ७० | २१ |

| | पृष्ठे | पङ्क्तौ |
|---|---|---|
| आख्यानिकी | ५० | १५ |
| ,, | ७० | २० |
| आनन्द | १०३ | २ |
| आपातलिका | १७ | १६ |
| आपीड | ४५ | ५ |
| आभास | १०२ | १९ |
| आर्द्रा | ७० | १९ |
| आर्या | ७ | ३ |
| आर्यागीति | १० | १७ |
| आर्षम् | ६६ | ५ |
| आसार | १०३ | १ |
| इन्दिरा | ७२ | १२ |
| इन्दुवदना | ८२ | १२ |
| इन्द्रवंशा | ७१ | १ |
| ,, | १२० | ४ |
| इन्द्रवज्रा | ६९ | २२ |
| ,, | ११८ | १ |
| उक्था | ५९ | ६ |
| उग्गाहा | १२९ | २२ |
| उज्ज्वला | ७७ | ५ |
| उत्कृति | ७४ | २ |
| ,, | १०१ | २० |
| उत्पलिनी | ८० | १५ |
| उद्दामा | १०२ | १७ |
| उदीच्यवृत्तिः | १८ | ११ |
| उद्गता | ४७ | १२ |
| उद्गीति | १० | १२ |
| उद्यंथी | ८२ | ११ |
| उपगीति | १० | ७ |
| उपचित्रकम् | ५० | १२ |
| उपचित्रम् | ५० | १४ |
| उपचित्रम् | ७१ | १२ |
| उपचित्रा | २१ | ४ |
| उपजाति | ७० | ६ |
| ,, | ११८ | ११ |
| उपमालिनी | ८५ | १२ |
| उपस्थितम् | ७२ | ११ |
| ,, | ८१ | २ |
| उपस्थितप्रचुपितम् | ४८ | ८ |
| उपस्थिता | ६८ | १२ |
| उपेन्द्रवज्रा | ७० | २ |
| ,, | ११८ | ४ |
| ऋषित् | ६१ | २१ |
| ऋद्धि | ७० | २१ |
| ऋषभ | ८६ | १ |
| ऋषभगजविलसितम् | ८७ | १५ |
| ऋषभविलसितम् | ९० | ७ |
| एला | ८५ | २४ |
| औपच्छन्दसकम् (वितम् वा) | १७ | १० |
| ,, | १२६ | ११ |
| कनकप्रभा | ८० | ६ |
| ,, | ११२ | २ |
| कन्दम् | ११० | १६ |
| कन्द | ८० | १९ |
| कन्दुकम् | ८० | २१ |
| कन्या | ६० | १४ |
| ,, | १०५ | १२ |
| कमल | ६० | ११ |
| ,, | ६५ | ६ |
| ,, | १०७ | ६ |
| कमला | ६६ | ११ |
| कारहवम् | ६१ | ८ |

| | पृष्ठे | पङ्क्तौ |
|---|---|---|
| कलहंस | ८२ | १ |
| कलिका | ४५ | १९ |
| कान्ता | ९१ | १२ |
| कान्तोत्पीडा | ७६ | ११ |
| काम | ५९ | ८ |
| कामक्रीड | १०६ | १७ |
| कामक्रीडा | ८५ | ७ |
| कामबाण | १०४ | २ |
| „ | ११२ | ९ |
| कासार | १०३ | १ |
| किरीटम् | १०१ | १ |
| [illegible] | ११७ | ३ |
| कीर्ति | ७० | १६ |
| कुटजगति | ८२ | २ |
| कुटिलम् | ८४ | ६ |
| कुटिलगति | ८० | १२ |
| कुटिला | ८३ | १ |
| कुड्मलदन्ती | ७१ | १ |
| कुपुरुषजनिता | ७२ | १७ |
| कुमारललिता | ६२ | २१ |
| कुमारी | ८४ | ८ |
| कुररीरुता | ८४ | १३ |
| कुसुमविचित्रा | ७५ | १८ |
| कुसुमस्तबकम् | १०३ | १५ |
| „ | ११३ | ६ |
| कुसुमितलतावेल्लिता | ९२ | १८ |
| कृति | ७० | ११ |
| „ | ९७ | १७ |
| केतुमती | ५० | [illegible] |
| केदार | १०२ | १ |
| केसरम् | ९२ | १० |
| कोकिलकम् | ९१ | ८ |
| कौमुदी | ५१ | १६ |
| क्रौञ्चकम् | ११० | १० |
| „ | ९१ | २५ |
| क्रीडाचक्रम् | ९१ | २१ |
| क्रौञ्चपदा | १०१ | १६ |
| क्षमा | ८० | २४ |
| खञ्जा | ५६ | ११ |
| खन्ना | ११६ | २२ |
| गजगति | ६५ | २ |
| गणच्छन्द | ६ | १० |
| गणमात्राच्छन्दसां गुरुलघुसंख्या निरूपणम् | ३४ | ६ |
| गण्डका | ९० | २० |
| „ | १०८ | १० |
| गरुडरुतम् | ८८ | ३ |
| गाथा | २९ | ११ |
| गायत्री | ९१ | ११ |
| गाहा | ११६ | २२ |
| गाहू | „ | [illegible] |
| गीता | ९८ | १२ |
| गीति | १० | [illegible] |
| गीतिका | ९८ | १६ |
| गीत्यार्या | २९ | ५ |
| „ | १०७ | १४ |
| गुर्वक्षरवर्ण | १०५ | ८ |
| गोविन्द | १०२ | १ |
| गौरी | ७६ | ४ |
| „ | ८० | ११ |
| घारि | ६० | १९ |
| „ | १०७ | २० |

| | पृष्ठे | पङ्क्तौ |
|---|---|---|
| चकिता | ८९ | १, २ |
| चक्रपदम् | ८४ | ११ |
| चमरी | ९२ | १८ |
| चञ्चरिकावली | ८० | १७ |
| चञ्चला | ८८ | ९ |
| ,, | १०८ | १६ |
| चञ्चलाक्षिका | ७६ | ३ |
| चण्डवृष्टिप्रपातः | १०१ | ७ |
| ,, | १२४ | ५ |
| चण्डी | ८१ | १ |
| चतुष्कलगणाः | ५ | १८ |
| चतुर्वंशा | ९१ | १५ |
| चन्द्रकान्ता | ८७ | ६ |
| चन्द्रमाला | ९७ | २ |
| चन्द्ररेखा | ८० | १८ |
| चन्द्रलेखा | ८४ | २१ |
| ,, | ९२ | ८ |
| चन्द्रवर्त्म | ७७ | १ |
| चन्द्रावर्ता | ८५ | ९ |
| चन्द्रिका | ८० | १५ |
| चन्द्रौरस | ८३ | ३ |
| चपलार्या | ८ | ४ |
| चपलावक्त्रम् | ३७ | १६ |
| चम्पकमाला | ६८ | ५ |
| चलम् | ९५ | ४ |
| चामरम् | ८७ | २ |
| ,, | १०८ | ७ |
| चारुहासिनी | १८ | १७ |
| चित्रपदा | ६४ | ६ |
| चित्रलेखा | ९१ | ६ |
| ,, | ९३ | ९ |

| | पृष्ठे | पङ्क्तौ |
|---|---|---|
| चित्रलेखा | ९५ | २ |
| चित्रसंभ्रमम् | ८८ | ४, ५ |
| ,, | १०८ | १६ |
| चित्रा | ३२ | १ |
| ,, | ८५ | १ |
| चूलिका | ३७ | [illegible] |
| छन्दोलक्षणम् | १ | १५ |
| छाया | ९५ | ११, २१ |
| जयचर्मं | ११३ | ११ |
| जगती | ७४ | १८ |
| जलधरमाला | ७६ | १७ |
| जलोद्धतगति | ७६ | ९ |
| ,, | १११ | १२ |
| जाया | ७० | १८ |
| जीमूतः | १०२ | १७ |
| ज्योति | ३६ | ११ |
| डीनम् | ६२ | २ |
| ,, | ११२ | १४ |
| तमचमनैः | १११ | २१ |
| ततम् | ७६ | १ |
| तनुमध्या | ६१ | १२ |
| तन्वी | १०० | २२ |
| तरलनयनम् | ७७ | २१ |
| ,, | १०७ | ११ |
| तामरसम् | ७७ | ६ |
| तारका | ८२ | २ |
| ताली | ५९ | १६ |
| ,, | १०५ | ११ |
| तीर्णा | ६० | १४ |
| ,, | १०५ | १२ |
| तुङ्गः | ६५ | ४ |

| | पृष्ठे | पङ्क्तौ |
|---|---|---|
| पञ्चचामर (रम्) | १०९ | १७,११,१० |
| पणव | ९० | ६ |
| ,, | १११ | १२ |
| पथ्य | ९८ | १ |
| पथ्या | ८४ | १२ |
| पथ्यार्या | ७ | १९ |
| पथ्यावक्त्रम् | ५७ | १३ |
| पदचतुरूर्ध्वम् | ७५ | २ |
| पद्यम् | ६ | १६ |
| परिभाषा | १ | ३ |
| पविता | ६६ | २१ |
| पादाकुलकम् | २१ | ६ |
| पुट | ७५ | २० |
| पुष्पदाम | ९५ | २४ |
| पुष्पिताग्रा | ५१ | १८ |
| ,, | १२५ | २० |
| पृथ्वी | ९० | १३ |
| ,, | १२१ | १७ |
| प्रकृति | ७४ | ११ |
| ,, | ९८ | १८ |
| प्रचित | १०२ | ८ |
| ,, | १२४ | २१ |
| प्रचितक | १०३ | ४ |
| प्रतिष्ठा | ६० | १३ |
| प्रत्यापीड | ४१ | ९ |
| प्रबोधिता | ८० | ८ |
| प्रभद्रकम् | ८५ | १५ |
| प्रभा | ७६ | ६ |
| प्रभावती | ७९ | १८ |
| प्रमदा | ८४ | ८ |
| प्रमाणिका | ६४ | १७ |
| प्रमाणिका | १०९ | १० |
| प्रमाणी | ५७ | १८ |
| ,, | १०७ | ६ |
| प्रमाणीवर्ग | १०९ | ५ |
| प्रमिताक्षरा | ७५ | १० |
| ,, | ११० | ७ |
| प्रमुदितवदना | ७६ | १ |
| प्रवरललितम् | ८८ | २१ |
| प्रहरणम् | १८ | १४ |
| प्रहरणकलिका ता) | ८२ | १०, ११ |
| प्रहर्षिणी | ७९ | १५ |
| ,, | १२१ | १२ |
| प्राच्यवृत्ति | १८ | ८ |
| प्रियंवदा | ७३ | २ |
| प्रिया | ५९ | १९ |
| ,, | ६१ | १ |
| ,, | १११ | २ |
| प्रेमा | ७० | २० |
| प्रवितक | १०३ | ६ |
| फुल्लदाम | ९६ | १ |
| बन्धु | ७० | १४ |
| बाला | ७० | १९ |
| बुद्धि | ७० | २१ |
| ब्रह्मरूपम् | ८८ | १६ |
| ,, | १०६ | २१ |
| भगणवर्ग | ११२ | १८ |
| भद्रकम् | ९९ | १५ |
| भद्रविराट् | ५० | ८ |
| ,, | १२५ | २० |
| भद्रा | ७० | १९ |
| भद्रिका | ६६ | ९ |

| | पृष्ठे | पङ्क्तौ | | पृष्ठे | पङ्क्तौ |
|---|---|---|---|---|---|
| भद्रिका | ७२ | ८ | मत्ताक्रीडा(डम्) | १०० | ११, १२ |
| भाराक्रान्ता | ९१ | १५ | मत्तेभविक्रीडितम् | ९८ | ९ |
| भुजगशिशुसृता | ६६ | २ | मदनललिता | ८८ | २५ |
| भुजङ्गप्रयातम् | ७५ | १७ | मदलेखा | ६३ | १ |
| „ | ११० | ६ | मदिरा | ९९ | १७ |
| भुजङ्गविजृम्भितं | १०१ | २१ | „ | ११२ | २२ |
| भुजङ्गविलासः | १०२ | १६ | मद्रकम् | ९९ | १४ |
| भुजङ्गसङ्गता | ६६ | १० | मधु | ५९ | १२ |
| भ्रमरपदकम् | ९५ | ७ | „ | १०७ | ५ |
| भ्रमरविलसिता(तं) | ७१ | १५ | मधुमती | ६२ | ४ |
| भ्रमरावली | ८६ | २ | मध्यक्षामा | ८२ | ९ |
| „ | ११२ | २२ | मध्या | ५९ | १५ |
| मकरन्दिका | '९६ | ४ | मनोरमा | ६८ | १४ |
| मञ्जरी | ४५ | १५ | मनोहंसः | ८५ | १८ |
| „ | ८४ | ७ | मन्थानः | ६१ | ५ |
| मञ्जीरम् | ९२ | ३ | „ | ११२ | १ |
| मञ्जुभाषिणी | ८० | ७ | मन्दरः | ६० | ९ |
| „ | ११२ | २ | „ | १०१ | १ |
| मञ्जुसौरभम् | ५२ | ७ | „ | ११२ | १९ |
| मञ्जुहासिनी | ८१ | ३ | मन्दाकिनी | ७६ | ५ |
| मणिकल्पलता | ८८ | १ | मन्दाक्रान्ता | ९० | १८ |
| मणिगुणनिकरः | ८५ | १२ | „ | ११२ | २१ |
| मणिमञ्जरी | ९६ | ४ | मयूरसारिणी | ६८ | ८ |
| मणिमध्यम् | ६६ | ९ | मल्लिका | ६४ | १४ |
| मणिमाला | ७७ | ३ | „ | १०८ | १ |
| मत्तगजगामिनी | ८७ | १२ | महामालिका | ९२ | १६ |
| मत्तमयूरम् | ८० | ९ | महालक्ष्मी | ६६ | १७ |
| „ | १२२ | ७ | „ | १११ | ६ |
| मत्तमातङ्गलीलाकरः | १०३ | १२ | महास्रग्धरा | १०० | ३ |
| „ | १११ | १५ | मही | ५९ | १३ |
| मत्ता | ६८ | १० | „ | १०९ | ७ |

| | | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| रेखाप्रस्तारो | गीत्यार्यादीनाम् | २८ | |
| | चतुर्दशाक्षरसमवृत्तानाम् | ८३ | |
| | त्रयोदशाक्षरसमवृत्तानाम् | ८१ | |
| | दशाक्षरसमवृत्तानाम् | ६९ | |
| | द्वादशाक्षरसमवृत्तानाम् | ७८ | |
| | नवाक्षरसमवृत्तानाम् | ६७ | |
| | पञ्चदशाक्षरसमवृत्तानाम् | ८६ | |
| | पदचतुरूर्ध्वादीनाम् | ४६ | |
| | पारिभाषिकशब्दानाम् | ५ | |
| | मात्रासमकभेदानाम् | २३ | |
| | वैतालीयभेदानाम् | १९ | |
| | शिखावचयोः | ५७ | |
| | षडक्षरसमवृत्तानाम् | ६२ | |
| | षोडशाक्षरसमवृत्तानाम् | ८९ | |
| | सप्तदशाक्षरसमवृत्तानाम् | ९१ | |
| | सप्ताक्षरसमवृत्तानाम् | ६२ | |
| | लक्ष्मी. | ८४ | २ |
| | लक्ष्मीधरा | ७५ | १२ |
| | ,, | ७६ | ८ |
| | ,, | १११ | ९ |
| | लघुचरणं· | १०७ | २ |
| | लता | ९३ | ११ |
| | ललना | ७६ | १८, २१ |
| | ललितम् | ४८ | ३ |
| | ,, | ७६ | २ |
| | ललिता | ७७ | ४ |
| | लवली | ४५ | १५ |
| | लालसा | ९३ | ११ |
| | लालित्यम् | ९९ | २१ |
| | लीना | ८७ | २१ |
| | लीलाकर· | १०२ | १७ |

| | पृष्ठे | पङ्क्तौ |
|---|---|---|
| लीलाखेल: | ८५ | ८ |
| ,, | १०६ | १७ |
| लीला | ८४ | १ |
| लौकिकच्छन्द· | ६ | ७ |
| वंशपत्रपतितम् | ९१ | १ |
| वंशस्थविलम्(स्था) | ७४ | १०, १२ |
| ,, | ११९ | १३ |
| वक्त्रम् | ३७ | ७ |
| वरतनु | ७६ | १५ |
| वरयुवती | ८७ | १७ |
| वरसुन्दरी | ८२ | २२ |
| वर्द्धमानम् | ४८ | ९ |
| वसन्ततिलका | ८२ | १० |
| ,, | ११२ | १५ |
| वसुमती | ६१ | ११ |
| वाणी | ६१ | १० |
| ,, | ७० | १६ |
| ,, | १०५ | १७ |
| वाणिनी | ८८ | २ |
| वातोर्मी | ७१ | ६ |
| वानवासिका | २१ | १४ |
| वार्ताहारिका | ५० | १६ |
| वासन्ती | ८४ | १४, १५ |
| वाहिनी | ७६ | १२ |
| विकृति | ७४ | १० |
| ,, | १०० | ६ |
| विद्युन्माला | ११६ | २२ |
| वितानम् | ३७ | १९ |
| ,, | ६४ | १ |
| विद्याधार | ७३ | ८ |
| ,, | १०६ | ११ |

| | पृष्ठे | पङ्क्तौ | | पृष्ठे | पङ्क्तौ |
|---|---|---|---|---|---|
| विद्युत् | ८० | १६ | वैकुण्ठ | १०१ | १९ |
| विद्युन्माला | ६४ | ८ | वैतालीयम् | १७ | १ |
| ,, | १०६ | ४ | ,, | ११५ | १ |
| विद्युल्लेखा | ६१ | १९ | वैदिकच्छन्द सङ्क्षेप | ११० | ११ |
| ,, | १०५ | १० | वैश्वदेवी | ७५ | १६ |
| विध्वङ्कमाला | ७२ | १६ | व्याल | १०१ | १० |
| ,, | ११२ | ४ | शङ्ख | १०२ | १८ |
| विपरीताख्यानकी | ५० | १८, २० | शङ्खनारी | ६१ | १ |
| ,, | ७० | १६ | | ११० | १ |
| विपरीताख्यानिकी | ५१ | १ | शम्भु | ९७ | ११ |
| , | ७० | १८ | शर्वरी | ७७ | १० |
| विपिनतिलकम् | ८७ | ८ | ,, | ८१ | ९ |
| विपुलार्या | ७ | २१ | शशिकला | ८५ | १० |
| विपुलावक्त्रम् | ३८ | १ | शशिवदना | ६१ | १६ |
| विबुधप्रिया | ९२ | १७ | ,, | ९९ | २ |
| विभ्रमम् | ९५ | १८ | शाली | ६० | २ |
| विम्ब | ६७ | १ | ,, | ११० | २ |
| वियोगिनी | ५० | ४ | शार्दूल | ९४ | १ |
| विलासिनी | ७१ | २१ | शार्दूललसितम् | ९२ | २३ |
| विश्लोक | २१ | १७ | शार्दूलविक्रीडितम् | ९५ | १२ |
| विषमवृत्तम् | ३५ | १२ | ,, | ११२ | १७ |
| ,, | ३६ | ४ | शाला | ७० | १७ |
| ,, | १२६ | १८ | शालिनी | ७१ | २ |
| विस्तार | १०३ | १ | ,, | ११९ | १९ |
| विस्मिता | ९५ | २० | शिखण्डितम् | ७२ | १२ |
| वृत्तम् | ३५ | ४ | शिखरिणी | ९० | ८ |
| ,, | ९७ | १८ | ,, | ११२ | ५ |
| ,, | १०८ | २० | शिखा | १६ | ८ |
| वृत्ता | ७१ | १७ | ,, | ५६ | २ |
| वृहती | ६६ | १ | शीर्षरूपम् | ६२ | १० |
| वेगवती | ५० | ५ | ,, | १०६ | १ |

| | पृष्ठे | पङ्क्तौ |
|---|---|---|
| शुद्धविराट् | ९७ | २१ |
| शुद्धविराड्वृषभम् | ४८ | ९ |
| शुद्धा वर्ती | १०५ | ४ |
| शेषा | ६१ | १८ |
| ,, | १०५ | १७ |
| शैलशिखा | ८७ | १९ |
| शोभा | ९८ | ७ |
| श्येनी | ७१ | १९ |
| ,, | १०८ | ४ |
| श्री | ५९ | ९ |
| ,, | ७१ | ५ |
| ,, | १०५ | ९ |
| श्लोक | १८ | २० |
| संकृति | ७४ | १० |
| ,, | १०० | २१ |
| संयाम | १०१ | १९ |
| संयुता | ९८ | २१ |
| संस्कार | १०२ | ९ |
| संहार. | १०३ | १ |
| सगणवर्ग | ११२ | ११ |
| सती | ९० | १७ |
| सत्कार. | १०२ | १ |
| सन्दोह | १०२ | २ |
| समकलय | ९७ | १६ |
| समसमानकादिम | ११४ | १२ |
| समचरणम् | ३५ | ११ |
| ,, | ५७ | १७ |
| ,, | ५९ | ३ |
| ,, | १०५ | ६ |
| समानिका | ६४ | १६ |
| ,, | १०८ | १ |

| | पृष्ठे | पङ्क्तौ |
|---|---|---|
| समानी | ५७ | १८ |
| ,, | ६३ | ६ |
| ,, | १०७ | २२ |
| समानीवर्ग | १०० | १७ |
| समुद्रलता | ९६ | ६ |
| सम्मोहा | ६१ | ४ |
| ,, | १०५ | १५ |
| सरसी | ९९ | ७ |
| सलिलनिधि | ९९ | ३ |
| सान्द्रम् | १०४ | ५ |
| सानन्द | १०३ | २ |
| सान्द्रपदम् | ७२ | ४ |
| सार | ५९ | १४ |
| ,, | १०१ | १९ |
| ,, | १०७ | १९ |
| सारङ्ग | ७७ | १२ |
| ,, | १११ | ९ |
| सारङ्गिका | ९९ | १९ |
| ,, | ८५ | २ |
| सारवती | ९९ | १ |
| सिंहकम् | ९९ | ५ |
| सिंहनाद | ८२ | १ |
| सिंहविक्रान्त | १०२ | ८ |
| सिंहविक्रीड | १०३ | १० |
| ,, | ११० | २५ |
| सिंहविस्फूर्जितम् | ९२ | १ |
| सिंहोन्नता (कला) | ८२ | १०, १५ |
| सुकेसरम् | ८४ | १० |
| सुखेलकम् | ८५ | १७ |
| सुधा | ९५ | १ |
| सुन्दरिका | १०० | १५ |

| | पृष्ठे | पङ्क्तौ |
|---|---|---|
| सुन्दरी | ५० | ३ |
| ,, | ७५ | ११ |
| ,, | १२४ | १८ |
| सुपवित्रम् | ८४ | ५ |
| सुप्रतिष्ठा | ६० | २४ |
| सुमुखी | ७२ | ५ |
| सुरसा | ८६ | ८ |
| सुराम | १०२ | १९ |
| सुवमा | ९८ | ४ |
| सुवदना | ९८ | १ |
| सुवास | ६१ | ८ |
| सुषमा | ६९ | १ |
| सोमराजी | ६२ | २ |
| ,, | ११० | ३ |
| सौम्या | २६ | २४ |
| सौरभकम् | ४८ | ३ |
| स्त्री | ५९ | १० |
| ,, | १०५ | १० |
| स्रक् | ८५ | ११ |
| स्रग्धरा | ९८ | १९ |
| ,, | ११२ | १३ |
| स्रग्विणी | ७६ | ७ |

| | पृष्ठे | पङ्क्तौ |
|---|---|---|
| स्रग्विणी | ११३ | ४ |
| स्वागता | ७१ | ११ |
| ,, | ११७ | १३ |
| हंस | ६० | २५ |
| हंसमाला | ६३ | ५ |
| हंसरुतम् | ६४ | १३ |
| हंसी | ६८ | १६ |
| ,, | ७० | १७ |
| ,, | ९९ | १३ |
| हरनर्तनम् | ८३ | १८ |
| हरि | ८१ | ११ |
| हरिणप्लुतम् | ८३ | २१ |
| हरिणप्लुता | ५१ | ६ |
| हरिणवल्लभा | ,, | ७ |
| हरिणी | ८० | २ |
| ,, | ११३ | ११ |
| हलमुखी | ६६ | ४ |
| हारिणी | ८१ | १३ |
| हारीत | ६१ | ६ |
| ,, | १११ | २४ |
| हीरकम् | ९५ | ६ |